गां भूमिमात्तसारां गृहीतधनामवेक्ष्य कुबेरादर्थं निष्क्रष्टुमाहर्तुं चकमे इयेष ॥ २६ ॥

वसिष्ठमन्त्रोक्षणजात्प्रभावादुदन्वदाकाशमहीधरेषु ।
मरुत्सखस्येव बलाहकस्य गतिर्विजघ्ने नहि तद्रथस्य ॥ २७ ॥

*वशिष्ठमन्त्रेति*। वसिष्ठस्य यन्मन्त्रेणोक्षणमभिमन्त्र्य प्रोक्षणं तज्जात्प्रभावात्सामर्थ्याद्धेतोः उदन्वदाकाशमहीधरेषूदन्वत्युदधावाकाशे महीधरेषु वा मरुत्सखस्य मरुतः सखेति तत्पुरुषो बहुव्रीहौ समासान्ताभावात् । ततो वायुसहायस्येति लभ्यते । वारीणां वाहको बलाकः (पृषोदरादित्वात्साधुः) तस्येव मेघस्येव तद्रथस्य गतिः संचारो न विजघ्ने न विहता हि ॥ २७ ॥

अथाधिशिश्ये प्रयतः प्रदोषे रथं रघुः कल्पितशस्त्रगर्भम् ।
सामन्तसंभावनयैव धीरः कैलासनाथं तरसा जिगीषुः ॥ २८ ॥

*अथेति*। अथ प्रदोषे रजनीमुखे तत्काले यानाधिरोहणविधानात् प्रयतो धीरो रघुः समन्ताद्भव सामन्तः राजमात्रमिति संभावनयैव कैलासनाथं कुबेरं तरसा बलेन जिगीषुर्जेतुमिच्छुः सन् कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथमधिशिश्ये रथे शयितवानित्यर्थः । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ॥ २८ ॥

प्रातः प्रयाणाभिमुखाय तस्मै सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये वृष्टिं शशंसुः पतितां नभस्तः ॥२९॥

*प्रातरिति*। प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ता अधिकृता भाण्डागारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तो नभसः (पञ्चम्यास्तसिल्प्रत्ययः) । पतितां हिरण्यमयीं सुवर्णमयीम् "दाण्डिनायन०" इत्यादिना निपातनात्साधुः । वृष्टिं शशंसुः कथयामासुः ॥ २९ ॥

तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात् ।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥ ३० ॥

*तमिति* भूपती रघुः अभियास्यमानादभिगमिष्यमाणात्कुबेराल्लब्धम् वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतमिव स्थितम् । 'पादाः प्रत्यन्तपर्वताः' इत्यमरः । 'शृङ्गम्' इति क्वचित्पाठः । तं भासुरं भास्वरम् "भञ्जभासमिदो घुरच्" इति घुरच् । हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ न तु चतुर्दशकोटिमात्रमित्येवकारार्थः ३०

जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥ ३१ ॥

*जनस्येति* । तावर्थिदातारौ द्वावपि साकेतनिवासिनोऽयोध्यावासिनः 'साकेतः स्यादयोध्यायां कोसला नन्दिनी च सा' इति यादवः । जनस्याभिनन्द्यसत्त्वौ स्तुत्यव्यवसायावभूताम् 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । कौ द्वौ । गुरुप्रदेयादधिकेऽतिरिक्तद्रव्य निःस्पृहोऽर्थी अर्थिकामादर्थिमनोरथादधिकं प्रददातीति तथोक्तः "प्रे दाज्ञः" इति कप्रत्ययः नृपश्च ॥ ३१ ॥

अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः ।
स्पृशन्करेणानतपूर्वकायं संप्रस्थितो वाचमुवाच कौत्सः ॥३२॥

*अथेति* । अथ प्रीतमना महर्षिः कौत्सः संप्रस्थितः प्रस्थास्यमानः सन् "आशंसायां भूतवच्च" इति भविष्यदर्थे क्तः । उष्ट्राणां क्रमेलकानां वामीनां वडवानां च शतैर्वाहितार्थं प्रापितधनमानतपूर्वकायम् विनयनम्रमित्यर्थः । प्रजेश्वरं रघुं करेण स्पृशन्वाचमुवाच ॥३२॥

किमत्र चित्रं यदि कामसूर्भूर्वृत्ते स्थितस्याधिपतेः प्रजानाम् ।
अचिन्तनीयस्तु तव प्रभावो मनीषितं द्यौरपि येन दुग्धा ॥३३॥

*किमिति* । वृत्ते स्थितस्य । ( न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा । सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥ ) इति कामन्दकः । तस्मिन्वृत्ते स्थितस्य प्रजानामधिपतेर्नृपस्य भूः कामान्सूत इति कामसूर्यदि "सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" इत्यादिना क्विप् । अत्र कामप्रसवने किं चित्रम् । न चित्रमित्यर्थः । किंतु तव प्रभावो महिमा त्वचिन्तनीयः । येन त्वया द्यौरपि मनीषितमभिलषितं दुग्धा । दुहेर्द्विकर्मकत्वादप्रधाने कर्मणि क्तः । ( प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ ) इति स्मरणात् ॥ ३३ ॥

आशास्यमन्यत्पुनरुक्तभूतं श्रेयांसि सर्वाण्यधिजग्मुषस्ते ।
पुत्रं लभस्वात्मगुणानुरूपं भवन्तमीड्यं भवतः पितेव ॥ ३४ ॥

*आशास्यमिति* । सर्वाणि श्रेयांसि शुभान्यधिजग्मुषः प्राप्तवतस्ते तवान्यत्पुत्रातिरिक्तमाशास्यमाशीःसाध्यमाशंसनीयं वा पुनरुक्तभूतम् । सर्वसिद्धमित्यर्थः । किं त्वीड्यं स्तुत्यं भवन्तं भवतः पितेवात्मगुणानुरूपम् । त्वया तुल्यगुणमित्यर्थः । पुत्रं लभस्व प्राप्नुहि ॥३४॥

इत्थं प्रयुज्याशिषमग्रजन्मा राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजापि लेभे सुतमाशु तस्मदालोकमर्कादिव जीवलोकः ॥ ३५ ॥

*इत्थमिति* । अग्रजन्मा ब्राह्मणः अग्रजन्मा द्विजे श्रेष्ठ भ्रातरि ब्रह्मणि स्मृतः' इति विश्वः' इत्थं राज्ञ आशिषं प्रयुज्य दत्त्वा गुरोः सकाशं समीपं प्रतीयाय प्राप । राजाऽपि जीवलोको जीवसमूहः 'जीवः प्राणिनि गीष्पतौ' इति विश्वः । अर्कादालोकं प्रकाशमिव 'चैतन्यम्' इति पाठे ज्ञानम् । तस्माद्दषेराशु सुतं लेभे प्राप ॥ ३५ ॥

ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम् ।
अत पिता ब्रह्मण एव नाम्ना तमात्मजन्मानमजं चकार ॥ ३६ ॥

*ब्राह्म इति* । तस्य रघोर्देवी महिषी ब्राह्मे "तस्येदम्" इत्यण् । ब्रह्मदेवताकेऽभिजिन्नामके मूहूर्ते किलेषदसमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम् "ईषदसमाप्तौ कल्पब्देश्यदेशीयरो" इत्यनेन कल्पप्प्रत्ययः । कुमारं पुत्रं सुषुवे 'कुमारो वालके स्कन्दे' इति बिश्वः । अतो ब्राह्ममुहूर्तोत्पन्नत्वात्पिता रघुर्ब्रह्मणो विधेरेव नाम्ना तमात्मजन्मानं पुत्रमजमजनामकं चकार । 'अजो हरौ हरे कामे विधौ छागे रघोः सुते' इति विश्वः ॥ ३६ ॥

रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥३७॥

*रूपमिति* । ओजस्वि तेजस्वि बलिष्ठं वा 'ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः । ओजो वले च दीप्तौ च' इति विश्वः । 'अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्यवपुषि श्लोकशब्दयोः ॥ इति विश्वः । तदेव पैतृकमेव वीर्यं शौर्यं तदेव नैसर्गिकं स्वाभाविकमुन्नतत्वं तदेव तादृशमेवेत्यर्थः । कुमारो बालकः प्रवर्तित उत्पादितो दीपः प्रदीपात्स्वोत्पादकदीपादिव स्वात्स्वकीयात् । "पूर्वादिभ्यो नवभ्यो वा" इति स्माद्भावो वैकल्पिकः । कारणाज्जनकान्न बिभिदे भिन्नो नाभूत् सर्वात्मना तादृश एवाभूदित्यर्थः ॥ ३७ ॥

उपात्तविद्यं विधिवद्गुरुभ्यस्तं यौवनोद्भेदविशेषकान्तम् ।
श्रीः साभिलाषापि गुरोरनुज्ञां धीरेव कन्या पितुराचकाङ्क्ष ॥३८॥

*उपात्तविद्यमिति* । गुरुभ्यो विधिवद्यथाशास्त्रमुपात्तविद्यम् लब्धविद्यम् । यौवनस्योद्भेदादाविर्भावाद्धेतोर्विशेषेण कान्तं कमनीयं तमजं

प्रति साभिलाषापि श्रीः धीरा स्थिरोन्नतचित्ता 'स्थिरा चित्तोन्नतिर्या तु तद्धैर्यमिति संज्ञितम्' इति भूपालः। कन्या पितुरिव गुरोरनुज्ञामाचकाङ्क्षेयेष । यौवराज्यार्होऽभूदित्यर्थः । अनुज्ञाशब्दात्पितृपारतन्त्र्यमुपमासामर्थ्यात्पाणिग्रहणयोग्यता च ध्वन्यते ॥ ३८ ॥

अथेश्वरेण क्रथकैशिकानां स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥

*अथेश्वरेणेति* । अथ स्वसुर्भगिन्या इन्दुमत्याः स्वयंवरार्थं कुमारस्याजस्यानयने उत्सुकेन क्रथकैशिकानां विदर्भदेशानामीश्वरेण स्वामिना भोजेन राज्ञाप्तो हितो दूतो रघवे विसृष्टः प्रेषितः । (क्रियामात्रयोगेऽपि चतुर्थी) ॥ ३९ ॥

तं श्लाघ्यसम्बन्धमसौ विचिन्त्य दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनमृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥

*तमिति* । असौ रघुस्तं भोजं श्लाघ्यसम्बन्धमनूचानत्वादिगुणयोगात्स्पृहणीयसम्बन्धं विचिन्त्य विचार्य पुत्रं च दारक्रियायोग्यदशं विवाहयोग्यवयसं विचिन्त्य ससैन्यमेनं पुत्रमृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रति प्रस्थापयामास । धीयतेऽस्यामिति धानी । "करणाधिकरणयोश्च" इत्यधिकरणे ल्युट्प्रत्ययः । राज्ञां धानीति विग्रहः ४०

तस्योपकार्यारचितोपचारा वन्येतरा जानपदोपदाभिः ।
मार्गे निवासा मनुजेन्द्रसूनोर्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥

*तस्येति* । उपकार्यासु राजयोग्येषु पटभवनादिषु 'सौधोऽस्त्री राजसदनमुपकार्योपकारिका' इत्यमरवचनव्याख्याने क्षीरस्वामी । उपक्रियत उपकरोति वा पटमण्डपादि राजसदनमिति । रचिता उपचाराः शयनादयो येषु ते तथोक्ता जानपदानां जनपदेभ्य आगतानामुपदाभिरुपायनैः वन्या वने भवा इतरे येषां ते वन्येतराः अवन्या इत्यर्थः। "न बहुव्रीहौ" इति सर्वनामसंज्ञानिषेधः । तत्पुरुषे सर्वनामसंज्ञा दुर्वारैव । तस्य मनुजेन्द्रसूनोरजस्य मार्गे निवासा वासनिका उद्यानान्याक्रीडाः 'पुमानाक्रीड उद्यानम्' इत्यमरः । तान्येव विहारा विहारस्थानानि तत्कल्पाः तत्सदृशा इत्यर्थः । "ईषदसमाप्तौ०" इति कल्पप्प्रत्ययः । बभूवुः ॥ ४१ ॥

स नर्मदारोधसि सीकरार्द्रैर्मरुद्भिरानर्तितनक्तमाले ।
निवेशयामास विलङ्घिताध्वा क्लान्तं रजोधूसरकेतु सैन्यम् ॥४२॥

*स इति* विलङ्घिताध्वाऽतिक्रान्तमार्गः सोऽजः सीकरार्द्रैः शीतलैरित्यर्थः मरुद्भिर्वातैरानर्तिताः कम्पिता नक्तमालाश्चिरबिल्वाख्यवृक्षभेदाः 'चिरबिल्वे नक्तमालः करजश्च करञ्जके' इत्यमरः। यस्मिंस्तस्मिन् निवेशार्हं इत्यर्थः। नर्मदाया रोधसि रेवायास्तीरे क्लान्तं श्रान्तं रजोभिर्धूसराः केतवो ध्वजा यस्य तत्सैन्यं निवेशयामास ॥ ४२ ॥

अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः प्राक्सूचितान्तःसलिलप्रवेशः।
निर्धौतदानामलगण्डभित्तिर्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥

*अथेति*। अथोपरिष्टादूर्ध्वम्। "उपर्युपरिष्टात्" इति निपातः। भ्रमद्भिः मदलोभादिति भावः। भ्रमरैः प्रागुन्मज्जनात्पूर्वं सूचितो ज्ञापितोऽन्तः सलिले प्रवेशो यस्य स तथोक्तः निर्धौतदाने क्षालितमदे अत एवामले गण्डभित्ती यस्य स तथोक्तः 'दानं गजमदे त्यागे' इति शाश्वतः। प्रशस्तौ गण्डौ गण्डभित्ती 'प्रशंसावचनैश्च' इति समासः। भित्तिशब्दः प्रशस्तार्थः। तथा च गरणत्नमहोदधौ—'मतल्लिकोद्धमिश्राः स्युः प्रकाण्डस्थलभित्तयः' इति। भित्तिः प्रदेशो वा 'भित्तिः प्रदेशे कुड्येऽपि' इति विश्वः। निर्धौतदानेनामला गण्डभित्तिर्यस्येति वा। वन्यो गजः सरित्तो नर्मदायाः सकाशात् (पञ्चम्यास्तसिल्प्रत्ययः) उन्ममज्जोत्थितः ॥ ४३ ॥

निःशेषविक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु।
नीलोर्ध्वरेखाशबलेन शंसन्दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥

*निःशेषेति*। कथंभूतो गजः। निःशेषविक्षालितधातुनाऽपि धौतगैरिकादिनाऽपि नीलाभिरूर्ध्वाभीरेखाभिस्तटाभिघातजनिताभिः शबलेन कर्बुरेण 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः। अश्मभिः पाषाणैर्विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन ऋक्षवान्नाम कश्चित्तत्रत्यः पर्वतः तस्य तटेषु वप्रक्रियां वप्रक्रीडाम्। उत्खातकेलिमित्यर्थः' 'उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते' इति शब्दार्णवः। शंसन्कथयन् सूचयन्नित्यर्थः। युग्मम् ॥ ४४ ॥

संहारविक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम्।
बभौ स भिन्दन्बृहतस्तरङ्गान्वार्यर्गलाभङ्ग इव प्रवृत्तः ॥ ४५ ॥

*संहारेति*। संहारविक्षेपयोः संकोचनप्रसारणयोर्लघुक्रियेण क्षिप्रव्यापारेण 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः। हस्तेन शुण्डादण्डेन 'हस्तो नक्षत्रभेदे स्यात्करेभकरयोरपि' इति विश्वः। सशब्दं सघोषं बृहत-

स्तरङ्गान्भिन्दन्विदारयंस्तीराभिमुखः स गजः वारी गजबन्धनस्थानम् 'वारी तु गजबन्धनी' इति यादवः । वार्या अर्गलाया विष्कम्भस्य भङ्गे भञ्जने प्रवृत्त इव बभौ ॥ ४५ ॥

शैलोपमः शैवलमञ्जरीणां जालानि कर्षन्नुरसा स पश्चात् ।
पूर्वं तदुत्पीडितवारिराशिः सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

*शैलोपम इति* । शैलोपमः स गजः शैवलमञ्जरीणां जालानि वृन्दान्युरसा कर्षन्पश्चात्तटमुत्ससर्प । पूर्वं तेन गजेनोत्पीडितो नुन्नो वारिराशिर्यस्य स सरित्प्रवाहस्तटमुत्ससर्प ॥ ४६ ॥

तस्यैकनागस्य कपोलभित्त्योर्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

*तस्येति* । तस्यैकनागस्यैकाकिनो गजस्य कपोलभित्त्योर्जलावगाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्रीर्मदवर्षलक्ष्मीर्वन्येतरेषां ग्राम्याणामनेकपानां द्विपानां दर्शनेन पुनर्दिदीपे ववृधे ॥ ४७ ॥

सप्तच्छदक्षीरकटुप्रवाहमसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

*सप्तच्छदेति* । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत्कटुः सुरभिः प्रवाहः प्रसारो यस्य तम् । 'कटुतिक्तकषायस्तु सौरभ्येऽपि प्रकीर्तिताः' इति यादवः । असह्यं तदीयं मदमाघ्राय सेनागजेन्द्राः विलङ्घितास्तिरस्कृत आधोरणानां हस्तिपकानां तीव्रो महान्यत्नो यैस्ते तथोक्ताः सन्तः 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः । विमुखाः पराङ्मुखाः बभूवुः ॥ ४८ ॥

स च्छिन्नबन्धद्रुतयुग्यशून्यं भग्नाक्षपर्यस्तरथं क्षणेन ।
रामापरित्राणविहस्तयोधं सेनानिवेशं तुमुलं चकार ॥४९॥

*स इति* । स गजः छिन्ना बन्धा द्रुताः पलायिताः युगं वहन्तीति युग्या वाहा यस्मिन्सः स चासौ शून्यश्च तम् । भग्नाक्षा अत एव पर्यस्ताः पतिता रथा यस्मिंस्तम् । रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ता व्याकुलाः 'विहस्तव्याकुलौ समौ' इत्यमरः । योधा यस्मिंस्तं सेनानिवेशं शिबिरं क्षणेन तुमुलं संकुलं चकार ॥ ४९ ॥

तमापतन्तं नृपतेरवध्यो वन्यः करीति श्रुतवान्कुमारः ।
निवर्तयिष्यन्विशिखेन कुम्भे जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥

*तमिति* । नृपते राज्ञो वन्यः कर्थवध्य इति श्रुतवाञ्शास्त्राज्ज्ञातवान्कुमार आपतन्तमभिधावन्तं तं गजं निवर्तयिष्यन्न तु प्रहरिष्यन् अत एव नात्यायतमनतिदीर्घं यथा स्यात् (नञर्थस्य नशब्दस्य सुप्सुपेति समासः) । कृष्टशार्ङ्ग ईषदाकृष्टचापः सन्विशिखेन बाणेन कुम्भे जघान । अत्र चाक्षुषः—( लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् । इयं हि श्रीर्यै करिणः ) इति । अत एव ( युद्धादन्यत्र ) इति द्योतनार्थमेव वन्यग्रहणं कृतम् ॥ ५० ॥

स विद्धमात्रः किल नागरूपमुत्सृज्य तद्विस्मितसैन्यदृष्टः ।
स्फुरत्प्रभामण्डलमध्यवर्ति कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

*स इति* । स गजो विद्धमात्रस्ताडितमात्रः किल न तु प्रहृतस्तथापि नागरूपं गजशरीरमुत्सृज्य तेन वृत्तान्तेन विस्मितैस्तद्विस्मितैः सैन्यैर्दृष्टः सन् स्फुरतः प्रभामण्डलस्य मध्यवर्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१ ॥

अथ प्रभावोपनतैः कुमारं कल्पद्रुमोत्थैरवकीर्य पुष्पैः ।
उवाच वाग्मी दशनप्रभाभिः संवर्धितोरःस्थलतारहारः ॥ ५२ ॥

*अथेति* । अथ प्रभावेनोपनतैः प्राप्तैः कल्पद्रुमोत्पन्नैः पुष्पैः कुमारमजमवकीर्याभिवृष्य दशनप्रभाभिर्दन्तकान्तिभिः संवर्धिता उरःस्थले ये तारहाराः स्थूला मुक्ताहारास्ते येन स तथोक्तः । वाचोऽस्य सन्तीति वाग्मी वक्ता । "वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः । स पुरुष उवाच ॥ ५२ ॥

मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥

*मतङ्गशापादिति* । अवलेपमूलाद्गर्वहेतुकात् 'अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च' इति विश्वः । मतङ्गस्य मुनेः शापान्मतजङ्गत्वमबाप्तवानस्मि । मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेर्गन्धर्वराजस्य तनूजं पुत्रम् । 'स्त्रियां मूर्तिस्तनुस्तनू' इत्यमरः । 'तन्वादेवा' इत्यूङिति केचित् । प्रियंवदं प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः ॥ ५३ ॥

स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५४ ॥

*स इति* । स महर्षिश्च प्रणतेन मयाऽनुनीतः सन्पश्चान्मृदुतां

शान्तिमगच्छत् । तथाहि । जलस्योष्णत्वमग्नेरातपस्य वा संप्रयोगात्संपर्कात् न तु प्रकृत्योष्णत्वम् यच्छैत्यं सा प्रकृतिः स्वभावः । विधेयप्राधान्यात्सेति स्त्रीलिङ्गनिर्देशः । महर्षीणां शान्तिरेव स्वभावो न क्रोध इत्यर्थः ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत्स तपोनिधिर्माम् ॥ ५५ ॥

*इक्ष्वाकुवंशेति* । इक्ष्वाकुवंशः प्रभवो यस्य सोऽजो यदा ते कुम्भमयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा वपुषो महिम्ना पुनः संयोक्ष्यसे संगंस्यस इति स तपोनिधिर्मामवोचत् ॥ ५५ ॥

संमोचितः सत्त्ववता त्वयाऽहं शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां वृथा हि मे स्यात्स्वपदोपलब्धिः ॥ ५६ ॥

*संमोचित इति* । चिरं प्रार्थितं दर्शनं यस्य तेन सत्त्ववता बलवता त्वयाऽहं शापात्संमोचितो मोक्षं प्रापितः । भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेन्मे स्वपदोपलब्धिः स्वस्थानप्राप्तिः 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । वृथा स्याद्धि । तदुक्तम्-(प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ) इति ॥ ५६ ॥

संमोहनं नाम सखे ममास्त्रं प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

*संमोहनमिति* । हे सखे । सखिशब्देन समप्राणतोक्ता । यथोक्तम्—( अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः ॥ ) इति । प्रयोगसंहारयोर्विभक्तमन्त्रं गान्धर्वं गन्धर्वदेवताकम् । संमोह्यतेऽनेनेति संमोहनं नाम ममास्त्रमादत्स्व गृहाण । यतोऽस्त्रात्प्रयोक्तुरस्त्रप्रयोगिणोऽरिहिंसा न च विजयश्च हस्ते । हस्तगतो विजयो भवतीत्यर्थः ॥ ५७ ॥

वधलज्जितः कथमस्त्रग्रहणपरः स्यामिति चेत्तत्राह—

अलं ह्रिया मां प्रति यन्मुहूर्तं दयापरोऽभूः प्रहरन्नपि त्वम् ।
तस्मादुपच्छन्दयति प्रयोज्यं मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

*अलमिति* । किं च । मां प्रति ह्रिया प्रहारनिमित्तयाऽलम् । कुतः । यद्यतो हेतोस्त्वं मां प्रहरन्नपि मुहूर्तं दयापरः कृपालुरभूः । तस्मादुपच्छन्दयति प्रार्थयमाने मयि त्वया प्रतिषेधः परिहारः स एव रौक्ष्यं पारुष्यम् तन्न प्रयोज्यं न कर्तव्यम् ॥ ५८ ॥

तथेत्युपस्पृश्य पयः पवित्रं सोमोद्भवायाः सरितो नृसोमः ।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं जग्राह तस्मान्निगृहीतशापात् ॥५९॥

*तथेतीति* । ना सोमश्चन्द्र इव नृसोमः उपमितसमासः । 'सोम ओषधिचन्द्रयोः' इति शाश्वतः । पुरुषश्रेष्ठ इत्यर्थः । अस्त्रविदस्त्रज्ञः सोऽजस्तथेति सोम उद्भवो यस्याः सा तस्या सोमोद्भवायाः सरितो नर्मदायाः 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका' इत्यमरः । पवित्रं पयः उपस्पृश्य पीत्वा आचम्येत्यर्थः । उदङ्मुखः सन्निगृहीतशापान्निवर्तितशापात् उपकृतादित्यर्थः । तस्मात्प्रियंवदादस्त्रमन्त्रं जग्राह ॥ ५९ ॥

एवं तयोरध्वनि दैवयोगादासेदुषोः सख्यमचिन्त्यहेतु ।
एको ययौ चैत्ररथप्रदेशान्सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥

*एवमिति* । एवमध्वनि मार्गे दैवयोगाद्दैववशादचिन्त्यहेत्वनिर्धार्यहेतुकं सख्यं सखित्वम् "सख्युर्यः" इति यप्रत्ययः आसेदुषोः प्राप्तवतोस्तयोर्मध्य एको गन्धर्वश्चैत्ररथस्य कुबेरोद्यानस्य प्रदेशान् 'अस्योद्यानं चैत्ररथम्' इत्यमरः । अपरोऽजः सौराज्येन राजन्वत्तया रम्यान्विदर्भान्विदेशान्ययौ ॥ ६० ॥

तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥

*तमिति* । नगरस्योपकण्ठे समीपे तस्थिवांसं स्थितं तमजं तस्याजस्यागमेनागमनेनारूढ उत्पन्नो गुरुः प्रहर्षो यस्य स क्रथकैसिकेन्द्रो विदर्भराजः प्रवृद्धोर्मिरूर्मिमाली समुद्रश्चन्द्रमिव प्रत्युज्जगाम ॥ ६१ ॥

प्रवेश्य चैनं पुरमग्रयायी नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

*प्रवेश्येति* । एनमजमग्रयायी सेवाधर्मेण पुरो गच्छन्नित्यर्थः । नीचैर्नम्रः पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्याऽर्पितश्रीस्तथा तेन प्रकारेण तत्र पुरे समेतो मिलितो जनो वैदर्भं भोजमागन्तुं प्राघूर्णिकं मेने अजं गृहेशं गृहपतिं मेने ॥ ६२ ॥

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् ।
रम्यां रघुप्रतिनिधिः स नवोपकार्यां
बाल्यात्परामिव दशां मदनोऽध्युवास ॥ ६३ ॥

*तस्येति*। रघुप्रतिनिधी रघुकल्पः रघुतुल्य इत्यर्थः। उक्तं च दण्डिना सादृश्यवाचकप्रस्तावे ( कल्पदेशीयदेश्यादि प्रख्यप्रतिनिधी अपि ) इति। सोऽजः प्रणतैर्नमस्कृतवद्भिः कर्तरि क्तः। तस्य भोजस्याधिकारो नियोगस्तस्य पुरुषैः अधिकृतैरित्यर्थः। प्रदिष्टां निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः पूर्णकुम्भो यस्यास्ताम् स्थापितमङ्गलकलशामित्यर्थः। रम्यां रमणीयां नवोपकार्यां नूतनं राजभवनम् (उपकार्या राजसद्मन्युपचारचिते ऽन्यवत्) इति विश्वः। मदनो बाल्यात्परां शैशवादनन्तरां दशामिव यौवनमिवेत्यर्थः। अध्युवासाधिष्ठितवान् तत्रोषितवानित्यर्थः। "उपान्वध्याङ्वसः" इति कर्मत्वम्॥ ६३॥

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव॥ ६४॥

*तत्रेति*। तत्रोपकार्यायां स्वयंवरनिमित्तं समाहृतः संमेलितो राजलोको येन तत्कमनीयं स्पृहणीयं कन्याललाम कन्यासु श्रेष्ठम 'ललामोऽस्त्री ललामापि प्रभावे पुरुषे ध्वजे। श्रेष्ठभूषाशुण्डशृङ्गपुच्छचिह्नाश्वलिङ्गिषु॥' इति यादवः। लिप्सोर्लब्धुमिच्छोः। लभेः सन्नन्तादुप्रत्ययः। अजस्य भावावबोधे पुरुषस्याभिप्रायपरिज्ञाने कलुषाऽसमर्था दयितेव रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव। ( राजानं कामिनं चौरं प्रविशन्ति प्रजागराः ) इति भावः। अभिमुखीशब्दो ङीषन्तश्च्व्यन्तो वा ६४॥

तं कर्णभूषणनिपीडितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम्।
सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः॥ ६५॥

*तमिति*। कर्णभूषणाभ्यां निपीडितौ पीनावंसौ यस्य तम् शय्याया उत्तरच्छदस्योपर्यास्तरणवस्त्रस्य विमर्देन घर्षणेन विगतोऽङ्गरागो यस्य तं न त्वङ्गनासङ्गादिति भावः। प्रथितप्रबोधं प्रकृष्टज्ञानं तमेनमजं सवयसः समानवयस्का उदारवाचः प्रगल्भगिरः सूतात्मजा बन्दिपुत्राः 'वैतालिका बोधकराः' इत्यमरः। वाग्भिः स्तुतिपाठैरुषसि प्राबोधयन्प्रबोधयामासुः॥ ६५॥

रात्रिर्गता मतिमतां वर मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता।
तामेकतस्तव बिभर्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्यपदावलम्बी ॥ ६६ ॥

*रात्रिरिति* । हे मतिमतां वर ! निर्धारणे षष्ठी । रात्रिर्गता शय्यां मुञ्च विनिद्रो भवेत्यर्थः । विनिद्रत्वे फलमाह—धात्रेति । धात्रा ब्रह्मणा जगतो धूर्भारः 'धूः स्याद्यानमुखे भारे' इति यादवः । द्विधैव द्वयोरेवेत्यर्थः एवकारस्तृतीयनिषेधार्थः । विभक्ता ननु विभज्य स्थापिता खलु । तत्किमत आह—तां धुरमेकत एककोटौ तव गुरुः पिता विनिद्रः सन्बिभर्ति तस्या धुरो भवान् धुरं वदतीति धुर्यो भारवाही तस्य पदं वहनस्थानम् अपरं यद्धुर्यपदं तदवलम्बी ततो विनिद्रो भवेत्यर्थः । न ह्युभयवाह्यमेको वहतीति भावः ॥ ६६ ॥

निद्रावशेन भवताऽप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥ ६७ ॥

*निद्रावशेनेति* । चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते । निद्रावशेन निद्राधीनेन स्त्र्यन्तरासङ्गोऽत्र ध्वन्यते । भवता पर्युत्सुकत्वमपि त्वय्यानुरक्तत्वमपीत्यर्थः । "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया । अपिशब्दस्तद्विषयानुरागस्यानपेक्षत्वद्योतनार्थः । निशि खण्डिता भर्तुरन्यासङ्गज्ञानकलुषिताऽबलेव नायिकेव ( ज्ञातेऽन्यलिङ्गविकृते खण्डितेर्ष्याकषायिता ) इति दशरूपके । अनवेक्षमाणाऽविचारयन्ती सती उपेक्षमाणेत्यर्थः । 'ह्यनवेक्ष्यमाणा' इति पाठे निद्रावशेन भवताऽनवेक्ष्यमाणाऽनिरीक्ष्यमाणा कर्मणि शानच् । लक्ष्मीः प्रयोजककर्त्री येन प्रयोज्येन चन्द्रेण पर्युत्सुकत्वं त्वद्विरहवदनाम् ( कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत् ) इत्यलंकारे । विनोदयति निरासयतीति योजना । शेषं पूर्ववत् । (नाथस्त्वर्थोपपत्तिमपश्यन्निमं पक्षमुपेक्षिष्ट) । लक्ष्मीर्येन चन्द्रेण सह त्वदाननसदृशत्वादिति भावः । विनोदयति विनोदं करोति । विनोदशब्दात् "तत्करोति तदाचष्टे" इति णिच्प्रत्ययः । सादृश्यदर्शनादयो हि विरहि-

णां विनोदस्थानानीति भावः। स चन्द्रोऽपि दिगन्तलम्बी पश्चिमाशां गतः सन् अस्तं गच्छन्नित्यर्थः। अत एव त्वदाननरुचिं विजहाति त्वन्मुखसादृश्यं त्यजतीत्यर्थः अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां परिगृहाणेति भावः॥ ६७॥

तद्वल्गुना युगपदुन्मिषितेन ताव-
त्सद्यः परस्परतुलामधिरोहतां द्वे।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरं च पद्मम्॥ ६८॥

*तद्वल्गुनेति*। तत्तस्माल्लक्ष्मीपरिग्रहणाद्वल्गुना मनोज्ञे न 'वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्' इति विश्वः। युगपत्तावदुन्मिषितेन युगपदेवोन्मीलितेन सद्यो द्वे अपि परस्परतुलामन्योन्यसादृश्यमधिरोहतां प्राप्नुताम् प्रार्थनायां लोट्। के द्वे अन्तः प्रस्पन्दमाना चलन्तीपरुषेतरा स्निग्धा तारा कनीनिका यस्य तत्तथोक्तम्। 'तारकाक्ष्णः कनीनिका' इत्यमरः। तव चक्षुः अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च युगपदुन्मेषे सति सम्पूर्णसादृश्यलाभ इति भावः॥ ६८॥

वृन्ताच्छ्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः।
स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य॥ ६९॥

*वृन्तादिति*। विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं ते तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यम् तादृक्सौगन्ध्यमित्यर्थः। परगुणेनान्यदीयगुणेन सांक्रामिकगन्धेनेत्यर्थः। ईप्सुराप्तुमिच्छुरिव "आप्ज्ञप्यृधामीत्" इतीकारादेशः। अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात्पुष्पबन्धनात् 'वृन्तं प्रसवबन्धनम्' इत्यमरः। हरत्यादत्ते। अरुणांशुभिन्नैस्तरणिकिरणोद्बोधितैः सरसिजैः कमलैः सह "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक्। संसृज्यते संगच्छते। सृजेर्दैवादिकात्कर्तरि लट्॥ ६९॥

ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः।

आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥ ७० ॥

*ताम्रोदरेष्विति* । ताम्रोदरेष्वरुणाभ्यन्तरेषु पतितं निर्धौता या हारगुलिका मुक्तामणयस्तद्वद्विशदं हिमाम्भो लब्धपरभागतया 'परभागो गुणोत्कर्षे' इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितमिवाभाति शोभते ॥ ७० ॥

यावत्प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।
आयोधनाग्रसरतां त्वयि वीर याते
किं वा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥ ७१ ॥

*यावदिति* । प्रतापनिधिस्तेजोनिधिर्भानुर्यावन्नाक्रमते नोद्गच्छति "आङ उद्गमने" इत्यात्मनेपदम् । तावत् भानावनुदित एवेत्यर्थः । अह्नाय झटिति 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः । अरुणेनानूरुणा 'सूरसूतोऽरुणोऽनूरुः' इत्यमरः । तमो निरस्तम् । तथाहि । हे वीर । त्वय्यायोधनेषु युद्धेषु 'युद्धमायोधनं जन्यम्' इत्यमरः । अग्रसरतां याते सति तव गुरुः पिता रिपून्स्वयमुच्छिनत्ति किं वा नोच्छिनत्त्येवेत्यर्थः । न खलु योग्यपुत्रन्यस्तभाराणां स्वामिनां व्यापारखेद इति भावः ॥ ७१ ॥

शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥ ७२ ॥

*शय्यामिति* । उभाभ्यां पक्षाभ्यां विनीता अपगता निद्रा येषां ते उभयपक्षविनीतनिद्राः अत्रसमासविषय उभशब्दस्थान उभयशब्दप्रयोग एव साधुरित्यनुसंधेयम् । यथाह कैयटः—( उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषयं उभशब्दस्य प्रयोगो मा भूत् उभयशब्दस्यैव यथा स्यात् उभयपुत्र इत्यादि भवति ) इति । मुखराण्युत्थानचलनाच्छब्दायमानानि शृङ्खलानि निगडानि कर्षन्तीति तथोक्तास्त एव तव स्तम्बे रमन्त इति स्तम्बेरमा हस्तिनः "स्तम्बकर्णयो रमिजपोः" इत्यच्प्रत्ययः *हस्तिसूचकयो* इति वक्तव्यात् । 'इभः स्तम्बेरमः पद्मी' इत्यमरः । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् ।

शय्यां जहति त्यजन्ति । येषां स्तम्बेरमाणां दन्ताः कोशा इव दन्तकोशाः दन्तकुडमलास्तरुणरागयोगाद्बालार्कारुणसंपर्काद्धेतोर्भिन्ना-द्रिगैरिकतटा इव विभान्ति धातुरक्त इव भान्तीत्यर्थः ॥ ७२ ॥

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥ ७३ ॥

*दीर्घेष्विति* । हे वनजाक्ष नीरजाक्ष ! वनं नीरं वनं सत्त्वम्' इति शाश्वतः । दीर्घेषु पटमण्डपेषु नियमिता बद्धा वनायुदेश्या वनायुदेश भवाः 'पारसीका वनायुजाः' इति हलायुधः । अमी वाहा अश्वा निद्रां विहाय पुरोगतानि लेह्यान्यास्वाद्यानि सैन्धवशिलाशकलानि 'सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे' इत्यमरः । वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति । उक्तं च सिद्धयोगसंग्रहे—( पूर्वाह्णकाले चाश्वानां प्रायशो लवणं हितम् । शूलमोहविबन्धघ्नं लवणं सैन्धवं वरम् ॥ ) इत्यादि ॥ ७३ ॥

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः ॥ ७४ ॥

*भवतीति* । म्लानः पुष्पोहारः पुष्पपूजा म्लानत्वादेव विरलभक्तिर्विरलरचनो भवति । प्रदीपाश्च स्वकिरणानां परिवेषस्य मण्डलस्योद्भेदेन स्फुरणेन शून्या भवन्ति निस्तेजस्का भवन्तीत्यर्थः । अपि चायं मञ्जुवाङ् मधुरवचनः पञ्जरस्थस्ते तव शुकस्त्वत्प्रबोधनिमित्ते प्रयुक्तामुच्चारितां नोऽस्माकं गिरं वाणीमनुवदति अनुकृत्य वदतीत्यर्थः । इत्थं प्रभातलिङ्गानि वर्तन्ते अतः प्रबोद्धव्यमिति भावः ॥ ७४ ॥

इति विरचितवाग्भिर्बन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटुनिनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥ ७५ ॥

*इतीति* । इतीत्थं विरचितवाग्भिर्बन्दिपुत्रैर्वैतालिकैः पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् सपदि विगतनिद्रः कुमारः 'तल्पं शय्याम्' 'तल्पं शय्याट्टदारेषु' इत्यमरः । उज्झाञ्चकार विससर्ज । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । कथमिव मदेन पटु मधुरं निनदद्भिः राजहंसैर्बोधितः सुप्रतीकाख्यः सुरगज ईशानदिग्गजः गङ्गाया इदं गाङ्गं सैकतं पुलिनमिव । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः सिकता शर्कराभ्यां च" इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसम्भवादित्यनुसंधेयम् ॥ ७५ ॥

अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताक्षिपक्ष्मा ।
कुशलविरचितानुकूलवेषः
क्षितिपसमाजमगात्स्वयंवरस्थम् ॥ ७६ ॥

*अथेति* अथोत्थानानन्तरमञ्चितानि चारूण्यक्षिपक्ष्माणि यस्य सोऽजः शास्त्रे दृष्टमवगतं दिवसमुखोचितं प्रातःकालोचितं विधिमनुष्ठानमवसाय्य समाप्य स्यतेर्ण्यन्ताल्ल्यप् । कुशलैः प्रसाधनदक्षैर्विरचितोऽनुकूलः स्वयंवरोचितो वेषो नेपथ्यं यस्य स तथोक्तः सन्स्वयंवरस्थं क्षितिपसमाजं राजमूहमगादगमत् "इणो गा लुङि" इति गादेशः । पुष्पिताग्रावृत्तमेतत् । तल्लक्षणम्—(अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥) इति ॥ ७६ ॥

इति महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनीसमाख्यया व्याख्यया समेतो महाकविश्रीकालिदासकृतौ रघुवंशे महाकाव्ये अजस्वयंवराभिगमनो नाम पञ्चमः सर्गः ॥ ५ ॥

# हरिदाससंस्कृतग्रन्थमालासमाख्य-
# काशीसंस्कृतसीरीज् पुस्तकमालायाः ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति। एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति। अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते। परं तु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत्।

| तत्र मुद्रितग्रन्थनामानि । | | रु. आ. पा. |
|---|---|---|
| १ नलपाकः नलविरचितः। संपूर्णः | ( पाकशास्त्रम् १ ) | १—८—० |
| २ संक्षेपशारीरकम्। रामतीर्थस्वामिकृताऽन्वयार्थबोधिनीटीकासहितम्। | ( वेदान्तं १ ) | १०-०—० |
| ३ वैशेषिकदर्शनम्। सटीक-प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम्। | ( वैशेषिकं १ ) | ३—८—० |
| ४ श्रीसूक्तम्। विद्यारण्यपृथ्वीधराद्याचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् | ( वैदिकं १ ) | ०—६—० |
| ५ लघुशब्देन्दुशेखरः चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः। | ( व्याकरणं १ ) | १०-०—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपण" दिनकरीय महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रीव्याख्यासहिता। | ( न्यायं १ ) | ६—०—० |
| ७ पञ्चीकरणम्। वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम्। | ( वेदान्तं २ ) | ०—८—० |
| ८ अलङ्कारप्रदीपः पण्डितवर विश्वेश्वरपाण्डेयनिर्मितः। | ( काव्यं १ ) | ०--८—० |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः। | ( कामशास्त्रं १ ) | ०—१२-० |
| १० जातकपारिजातः। श्रीवैद्यनाथशर्मणा विरचितः। | [ज्यो० १] | २-०-० |
| ११ पारस्करगृह्यसूत्रम्। कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम्। | [ कर्म० १ ] | ०--८--० |
| १२ पुरुषसूक्तम्। सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम्। | ( वैदिकं २ ) | १--४—० |

| तत्र मुद्रितग्रन्थनामानि | | रु. आ. पा. |
|---|---|---|
| १३ श्रीमत्सनत्सुजातीयम्-श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम । | [वे०३] | १—४—० |
| १४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदासवि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । | ( काव्यं २ ) | १—८—० |
| १५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः | [ छंदः १ ] | ०—६—० |
| १६ कारिकावली मुक्तावली-न्यायचन्द्रिका-टीकाद्वयसहिता सटिप्पणा । | ( न्याय २ ) | १—०—० |
| १७ पारस्करगृह्यसूत्रं हरिहरभाष्य-गदाधरभाष्यद्वयसहितम । ( कर्मकाण्डं २ ) | सादीजिल्द | ३—०—० |
| १८ संक्षेपशारीरकम्-मधूसूदनीटीका भाग १—२ | ( वेदान्तं ४ ) | १०—०—० |
| १९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः । | | ०—८—० |
| २० कातीयेष्टिदीपकः । | ( दर्शपौर्णमासपद्धतिः ) | १—०—० |
| २१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् | ( स्तोत्रवि० ) | १—०—० |
| २२ बौद्धाऽऽचार्य श्रीधर्मकीर्तिप्रणीतः सटीकन्यायबिन्दुः भाषाटीकासहितः | ( बौद्धन्याय वि० १ ) | १—८—० |
| २३ सपरिष्कृत दर्पणसहित वैयाकरणभूषणसारः | ( व्याकरणं वि० ३ ) | ४—०—० |
| २४ न्यायवार्त्तिकतात्पर्य्यटीका-श्रीवाचस्पतिमिश्रविरचिता । प्रथमाध्याय-प्रथमभागः । | ( न्यायविभाग ३ ) | ४—०—० |
| २५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामीशास्त्रीकृतया सारविवेचिन्या व्याख्ययासहितः | ( मीमांसावि० १ ) | २—८—० |
| २६ पौरोहित्यकर्मसारः | ( कर्मकाण्ड वि० ) | ०—४—० |

पत्रादिप्रेषणस्थानम् } जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर लेन,
बनारस सिटी ।

* श्रीः *

श्रीगणेशाय नमः ।

# अथ रघुवंशमहाकाव्यस्य

## अर्थप्रकाशिका टीका ।

*वागर्थाविति* । वागर्थौ शब्दाऽभिधेयौ इव सम्पृक्तौ नित्यसम्बद्धौ जगतो लोकस्य पितरौ प्रसूजनयितारौ पार्वतीपरमेश्वरौ उमामहेश्वरौ वागर्थप्रतिपत्तये शब्दार्थोभयसम्यक्ज्ञानाय वन्दे अभिवादये । यथा वागर्थौ नित्यसम्बद्धौ(अभिन्नौ) तथैवाऽभिन्नौ लोकस्योत्पादकौ उमामहेश्वरौ शब्दार्थोभयसम्यग्ज्ञानार्थं स्तौमीत्यर्थः । उमामहेश्वरयोः अथवा(शिवनारायणौ)शब्दार्थयोरिव नित्यसम्मिलितत्वादेतत्स्तुत्याऽहमिदमेव शब्दार्थज्ञान लाभ इति भावः ॥

(समासः) वाक् च अर्थश्च वागर्थौ तयोः प्रतिपत्तिस्तस्यै वागर्थप्रतिपत्तये । (प्रतिपत्तिर्ज्ञानं प्रतिपद्यते ज्ञानार्थत्वात्) । पितरौ माता च पिता चेति विग्रहे द्वन्द्वैकशेषः । पर्वतस्याऽपत्यं स्त्री पार्वती परमश्चासावीश्वरः परमेश्वरः पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ । (अथवा) पार्वतीं पातीति पार्वतीपः रमाया ईश्वरो रमेश्वरः पार्वतीपश्च रमेश्वरश्च पार्वतीपरमेश्वरौ । (अथ वा) पार्वतीं पिपर्तीति पार्वतीपरः माया ईश्वरो मेश्वरः पार्वतीपरश्च मेश्वरश्च पार्वतीपरमेश्वरौ ॥ १ ॥

*(क्वेति)* सूर्यप्रभवः भानुकारणो वंशो रघोरन्वयः क्व । अल्पविषया परिमितज्ञेयार्था मति बुद्धिश्च मे क्व । अनयोर्महदन्तरम् । दुस्तरं दुःखेनाऽपि तरितुमशक्यं सागरं समुद्रं मोहादज्ञानात् उडुपेन प्लवेन (अथवा चर्मावनद्धयानपात्रेण) तितीर्षुस्तरितुमिच्छुरस्मि भवामि । सूर्यवंशस्य ममाल्पविषयमतेश्च महाऽन्तरेऽपि सूर्यवंशवर्णने मदीया प्रवृत्तिश्चर्मावनद्धयानपात्रेण सागरतरणमिव हास्यावषयेति भावः ॥

(समासः) प्रभवत्यस्मादिति प्रभवः कारणं सूर्यः प्रभवो यस्य स सूर्यप्रभवः । अल्पोऽनधिको विषयो ज्ञेयोऽर्थो यस्याः सा अल्पविषया ।

तरितुमिच्छति तितीर्षति तितीर्षतीति तितीर्षुः। दुःखेन तरितुमशक्यं दुस्तरम् ॥ २ ॥

*(मन्द इति)* किञ्च मन्दो मूढः तथापि कवियशः प्रार्थी काव्यनिर्माणजातकीर्त्तिकाङ्क्षी अहं प्रांशुलभ्ये उन्नतपुरुषप्राप्ये फले फलविषये लोभात्प्राप्तीच्छया उद्बाहुः उच्छ्रितहस्तो वामनः खर्व इव उपहास्यतामुपहासविषयतां गमिष्यामि प्राप्स्यामि। उन्नतपुरुषलभ्यफलस्य ग्रहणे वामनो यथोपहास्यो भवति तथैव विशिष्टकविवर्णनीयचरितस्य रघुकुलस्य वर्णनेऽहमुपहास्यो भविष्यामीत्यर्थः ॥

(समासः) कवीनां यशः कवियशस्तत्प्रार्थयितुं शीलमस्य स कवियशःप्रार्थी। प्रांशुभिलभ्यं प्रांशुलभ्यं तस्मिन्। उदुच्छ्रितौ बाहू यस्य स उद्बाहुः ॥ ३ ॥

*(अथवेति)* पूर्वसूरिभिः प्राचीनकविभि र्वाल्मीक्यादिभिः कृतवाग्द्वारे रचितैर्प्रबन्धात्मकवचनप्रवेशे अस्मिन् सूर्यप्रभवे वंशे कुले वज्रसमुत्कीर्णे मणिवेधकसूचीविशेषविद्धे मणौ रत्ने सूत्रस्य इव मे मम गतिः सञ्चारोऽस्ति। यथा मणिवेधकसूचीविद्धे मणौ सूत्रस्य सञ्चरणम्भवति तथैव वाल्मीक्यादिकृतप्रवेशेऽस्मिन् सूर्यवंशे ममापि सञ्चरणमस्तीत्यर्थः।

(समासः) पूर्वाश्च ते सूरयः पूर्वसूरयस्तैः पूर्वसूरिभिः। कृतं रामायणादिप्रबन्धरूपवाग्द्वारं यस्य स तस्मिन् कृतवाग्द्वारे। वज्रेण समुत्कीर्णो वज्रसमुत्कीर्णस्तस्मिन् वज्रसमुत्कीर्णे ॥ ४ ॥

*(स इति)* सः अहम्, आजन्मशुद्धानां जन्मारभ्य निषेकादिनिखिलसंस्कारसंस्कृतानाम् आफलोदयकर्मणाम् फलोदयपर्यन्तं व्यापारवताम्। आसमुद्रक्षितीशानाम् समुद्रपर्यन्तपृथिवीपतीनाम्। आनाकरथवर्त्मनाम् स्वर्गपर्यन्तस्यन्दनमार्गाणाम्।

(समासः) जन्मारभ्य शुद्धा आजन्मशुद्धास्तेषामाजन्मशुद्धानाम्। फलोदयमभिव्याप्य कर्म येषां ते आफलोदयकर्माणस्तेषामाफलोदयकर्मणाम्। समुद्रमभिव्याप्य क्षितीशा आसमुद्रक्षितीशास्तेषामासमुद्रक्षितीशानाम्। नाकमभिव्याप्य रथस्य वर्त्म येषां ते आनाकरथवर्त्मानस्तेषामानाकरथवर्त्मनाम् ॥ ५ ॥

*(यथेति)* यथाविधिहुताग्नीनां शास्त्ररीत्या तर्पितपावकानां यथाकामार्चितार्थिनाम् यथाभिलाषपूजित(सन्तोषित)याचकानां यथाऽपराधदण्डानाम् अपराधानुसारेण दण्डप्रदानां यथाकालप्रबोधिनाम् समयमनुल्लँघ्य प्रबोधनशीलानाम्।

( समासः ) यथाविधि विधिमनतिक्रम्य हुता अग्नयो यैस्ते तथोक्तास्तेषां तथोक्तानाम् । यथाकामं काममनतिक्रम्य अर्चिता अर्थिनो यैस्ते तथोक्तास्तेषां तथोक्तानाम् । यथाऽपराधम् अपराधमनतिक्रम्य दण्डो येषां तथोक्तास्तेषां तथोक्तानाम् । यथाकालं कालमनतिक्रम्य प्रबोद्धुं शीलमेषां ते तथोक्तास्तेषां तथोक्तानाम् ॥ ६ ॥

*(त्यागायेति)* त्यागाय सत्पात्रे विनियोगाय संभृतार्थानां सञ्चितनाम । सत्याय यथार्थाय मितभाषिणाम् परिमितभाषणशीलानाम् । यशसे कीर्त्तये विजिगीषूणाम् । विजयाभिलाषिणाम् । प्रजायै सन्तानाय गृहमेधिनाम् कृतदारपरिग्रहाणाम् ।

( समासः ) संभृताः सञ्चिता अर्था धनानि यैस्ते तथोक्तास्तेषां तथोक्तानाम् । मितं परिमितं भाषितुं शीलमेषां ते मितभाषिणस्तेषां तथोक्तानाम् । विजेतुमिच्छवो विजेषवस्तेषां तथोक्तानाम् । गृहैं दारै र्मेधन्ते सङ्गच्छन्ते ये ते गृहमेधिनस्तेषां तथोक्तानाम् ॥ ७ ॥

*( शैशव इति )* शैशवे बाल्ये (वयसि) अभ्यस्तविद्यानां पठितशास्त्राणां । यौवने तारुण्ये (वयसि) विषयैषिणां भोगाकाङ्क्षिणां वार्द्धके वृद्धत्वे (जरायां) (वयसि) मुनिवृत्तीनां कृतयोग्याचरणानां । अन्ते कायत्यागसमये योगेन चित्तवृत्तिनिरोधेन (ईश्वरध्यानेन वा) तनुत्यजाम् शरीरत्यागिनाम ।

( समासविग्रहौ ) शिशोर्भावः शैशवं तस्मिन् । अभ्यस्ता पठिता विद्या यैस्तेऽभ्यस्तविद्यास्तेषाम । यूनां भावो यौवनं तस्मिन् । विषयं भोगमेषितुं शीलमेषां ते विषयैषिणस्तेषाम् । वृद्धस्य भावो वार्द्धकं तस्मिन् । मुनीनां वृत्तिरिव वृत्तिर्येषां ते मुनिवृत्तयस्तेषाम् । तनुं शरीरं त्यजन्तीति तनुत्यजस्तेषाम् ॥ ८ ॥

*( रघूणामिति )* सोऽहमिति पदद्वयं पञ्चमश्लोकस्थमध्याहृत्य-व्याख्येयः । सोऽहं तनुवाग्विभवोऽपि स्वल्पवचनैश्वर्योऽपि । तद्गुणै रघुगुणैराजन्मशुद्ध्यादिभिः (कर्तृभिः) कर्णं श्रोत्रं (ममेति शेषः) आगत्य प्राप्य चापलाय चपलकर्म कर्तुं प्रचोदितः प्रेरितः ( सन् ) रघूणामुक्तविशेषणविशिष्टानामन्वयं वंशं ( तद्विषयकप्रबन्धम् ) वक्ष्ये अभिधास्ये नाहमल्पवचनप्रसारः स्वयं रघुवंशविषयकप्रबन्धं रचयितुमुद्यतः किन्तु रघुगुणानां प्रेरणयेत्यर्थः ।

( समासः ) तन्वी चासौ वाक् तनुवाक् तनुवाग्विभवो यस्य स

तनुर्वाग्विभवः (अथवा) वागेव विभवो वाग्विभवस्तनु र्वाग्विभवो यस्य स तथोक्तः । तेषां गुणास्तद्गुणास्तैस्तद्गुणैः ॥ ९ ॥

*( तमिति )* सदसद्व्यक्तिहेतवो गुणदोषविवेककर्तारः सन्तः तं रघुवंशाभिधं प्रबन्धं श्रोतुमाकर्णितुम् अर्हन्ति । हि तथाहि हेम्नः सुवर्णस्य विशुद्धि र्निर्दोषस्वरूपं श्यामिका द्रव्यान्तरसंसर्गरूपो दोषाऽपि वा अग्नौ बह्नौ संलक्ष्यते दृश्यते । यथा बह्निमन्तरा न कैश्चित्सुवर्णस्य गुणदोषौ द्रष्टुं शक्येते तथा सन्तमन्तराऽस्मद्रचितप्रबन्धदोषगुणावपीत्यर्थः ।

( समासः ) सच्च असच्च सदसती तयोर्व्यक्तिस्तस्या हेतवः सदसद्व्यक्तिहेतवः ॥ १० ॥

*( वैवस्वत इति )* मनीषिणां विदुषां माननीयः पूज्यः छन्दसां वेदानां प्रणव ओङ्कार इव महीक्षितां क्षितीश्वराणाम् आद्यः आदिभूतो वैवस्वतो नाम मनुरासीत् बभूव । यथा वेदानामादिः प्रणवस्तथा राज्ञामादि वैवस्वत इति भावः ।

( विग्रहः ) मनस ईषिणो मनीषिणस्तेषाम् । मानितुं योग्यो माननीयः । महीं क्षियन्तीशते इति महीक्षितस्तेषाम् । विवस्वतोऽपत्यं पुमान् वैवस्वतः ॥ ११ ॥

*( तदन्वय इति )* शुद्धिमति पवित्रीभूते ( निर्दुष्टे ) तदन्वये मनुवंशे शुद्धिमत्तरः अतिपवित्रः दिलीप इति दिलीपनामा राजेन्दुः भूपचन्द्रः क्षीरार्णवे इन्दुश्चन्द्र इव प्रसूतो जातः । यथा क्षीरनिधाविन्दुर्जातस्तथा मनुकुले दिलीपो जात इति भावः ।

( समासविग्रहौ ) शुद्धिरस्यास्तीति शुद्धिमान् अतिशयेन शुद्धिमान् शुद्धिमत्तरः । तस्यान्वयस्तदन्वयस्तस्मिन् । राजा इन्दु रिव राजेन्दुः । क्षीराणि निधीयन्तेऽस्मिन्निति क्षीरनिधिस्तस्मिन् ॥ १२ ॥

*( व्यूढेति )* (दिलीपं विशिनष्टि) व्यूढोरस्को विपुलवक्षस्थलः वृषस्कन्धः वृषभांसः । शालप्रांशुः अत्युन्नतः महाभुजो महाबाहुः आत्मकर्मक्षमं स्वकार्यसाधनयोग्यं देहं शरीरम् आश्रितः क्षात्रः क्षत्रसम्बन्धी धर्म इव स्थितः । मूर्त्तिमान् पराक्रम इति भावः ॥

( समासः ) व्यूढमुरो यस्य स व्यूढोरस्कः । वृष इव स्कन्धो यस्य स वृषस्कन्धः । शाल इव प्रांशुः शालप्रांशुः । महान्तौ भुजौ यस्य स महाभुजः । आत्मनः कर्म आत्मकर्म तस्य क्षमस्तम् । क्षत्रस्यायं क्षात्रः १३॥

*(सर्वेति)* सर्वातिरिक्तसारेण सकलप्राण्यभिभूतबलेन सर्वतेजोऽभि-

भाविना स्वप्रतापेन सकलजनाभिभवकर्त्रा सर्वोन्नतेन सकलोच्छ्रिनेन आत्मना शरीरेण उर्वीं पृथ्वीमाक्रम्य मेरुरिव हेमाद्रिरिव स्थितः । यथा सकलपर्वतापेक्षयाऽधिकसारः स्वतेजसाऽन्याभिभवकर्ता सकलपर्वताऽपेक्षयोन्नतो मेरुर्भूमिमाक्रम्य स्थितस्तथैव दिलीपोऽपीत्यर्थः ।

( समासः ) सर्वेभ्योऽतिरिक्तोऽधिकः सारो यस्य स तेन । सर्वान् तेजसाऽभिभवितुं शीलमस्य स सर्वतेजोऽभिभावी तेन । सर्वेभ्य उन्नतः सर्वोन्नतस्तेन ॥ १४ ॥

*( आकारेति )* आकारसदृशप्रज्ञः आकृतितुल्यबुद्धिः, प्रज्ञया सदृशागमः बुद्ध्यनुगुणशास्त्राधिगमः, आगमैः सदृशारम्भः शास्त्रानुगुणकर्मा, आरम्भसदृशोदयः कर्मतुल्यफलसिद्धिः । (तस्य दिलीपस्यासीदितिशेषः) । तस्य राज्ञो दिलीपस्य यथाऽऽकारोऽतिसुन्दरस्तथा बुद्धिरपि । यथा च बुद्धिस्तथा शास्त्रे परिश्रमः । शास्त्रानुसारिणी क्रिया । क्रियानुरूपा च फलसिद्धिरासीदित्यर्थः ।

( समासः ) आकारेण सदृशी प्रज्ञा यस्य सः । प्रज्ञया सदृश आगमो यस्य सः । आगमैः सदृश आरम्भो यस्य सः । आरम्भेण सदृश उदयो यस्य सः ॥ १५ ॥

*( भीमेति )* स दिलीपः भीमकान्तैः भयङ्करमनोज्ञैः नृपगुणैः राजगुणैस्तेजः प्रतापादिभिः उपजीविनाम् आश्रितानाम् यादोरत्नैः जलजन्तु–मणिभिः अर्णवः समुद्र इव अधृष्योऽनभिभवनीयोऽभिगम्यः सेवनीयश्च बभूव । स दिलीपः जलजन्तुरत्नादिभिः समुद्र इव तेजः प्रतापादिभीराजगुणैरनभिभवनीयः सेवनीयश्च बभूव ।

( समासविग्रहौ ) भीमाश्च कान्ताश्च भीमकान्तास्तैः । नृपाणां गुणा नृपगुणास्तैः । उपजीवितुं शीलमस्त्येषामित्युपजीविनस्तेषाम् । यादांसि च रत्नानि च यादोरत्नानि तैः । धर्षितुं योग्यो धृष्यो न धृष्योऽधृष्यः । अभिगन्तुं योग्योऽभिगम्यः ॥ १६ ॥

*( रेखेति )* नियन्तुः शिक्षकस्य सारथेश्च तस्य दिलीपस्य नेमिवृत्तयः चक्रधाराव्यापाराः प्रजाः जनाः आमनोः मनुमारभ्य क्षुण्णादभ्यस्तात् प्रहताच्च वर्त्मनः आचारपद्धतेर्वर्त्मनो मार्गाच्च परमधिकं रेखामात्रमपि रेखाप्रमाणमपि न व्यतीयुर्न व्यतिक्रान्तवत्यः । यथा चतुरसारथिचालिता रथचक्रधाराः पूर्वाऽभ्यस्तमार्गं न जहति तथा तस्य दिलीपस्य प्रजा अपि पूर्वाभ्यस्ताचारपद्धतिं न जहुरित्यर्थः ।

( समासविग्रहौ ) नेमीनां वृत्तिर्नेमिवृत्तिः सेव वृत्तिर्यासां ता नेमिवृत्तयः । रेखाप्रमाणमस्येति रेखामात्रम् ॥ १७ ॥

*( प्रजानामिति )* स राजा दिलीपः प्रजानां जनानां भूत्यर्थं वृद्ध्यर्थमेव ताभ्यः प्रजाभ्यो बलिं करमग्रहीत् गृहीतवान् । हि यतः रविः सूर्यः सहस्रगुणं सहस्रधा उत्स्रष्टुं दातुं रसं जलमादत्ते गृह्णाति । यथा सूर्यः सहस्रगुणं दातुं जलं गृह्णाति तथा दिलीपोऽपि । यज्ञद्वारा प्रजावृद्ध्यर्थमेव ताभ्यः करं गृहीतवानित्यर्थः ।

( समासः ) भूत्या अर्थाय भूत्यर्थं तस्मै । सहस्रं गुणा यस्मिन् कर्मणि तत्सहस्रगुणं ( क्रियाविशेषणमेतत् ) तद्यथा स्यात्तथा ॥ १८ ॥

*( सेनेति )* तस्य राज्ञो दिलीपस्य सेना चतुरङ्गबलम् परिच्छदः छत्रचामरादितुल्यमभूत् । अर्थसाधनं प्रयोजनसम्पादकं तु द्वयमेव तस्यासीत् एकं शास्त्रेषु आगमेषु अकुण्ठिता अव्याहता बुद्धिः प्रज्ञा, अपरं धनुषि शरासने आतता आरोपिता मौर्वी ज्या चेति । तस्य दिलीपस्य सेना नार्थसाधनमभूत्किन्तु बुद्धि र्ज्या चेत्युभयमेवार्थसाधनमभूदित्यर्थः ।

( समासविग्रहौ ) द्वयोर्भावो द्वयम् । अर्थस्य साधनमर्थसाधनम् ॥ १९ ॥

*( तस्येति )* संवृतमन्त्रस्य गुप्तविचारस्य च पुनः गूढाकारेङ्गितस्य अज्ञाताकृतिहृद्गतविकारस्य तस्य दिलीपस्य प्रारम्भाः सामाद्युपायाः प्राक्तनाः पूर्वजन्मोद्भवाः संस्कारा वासना इव फलानुमेयाः फलेन ज्ञेया आसन् ।

( समासविग्रहौ ) सम्वृतो मन्त्रो यस्य स तस्य । गूढे आकारेङ्गिते यस्य स तस्य । प्राग्भवाः प्राक्तनाः अनुमातुं योग्या अनुमेयाः फलैरनुमेयाः फलानुमेयाः ॥ २० ॥

*( जुगोपेति )* स दिलीपः अत्रस्तो निर्भीकः सन् आत्मानं शरीरं जुगोप ररक्ष । अनातुरोऽरुग्ण एव धर्मं पुण्यं भेजे शिश्रिये । अगृध्नुरलुब्धः सन्नेव अर्थं धनमाददे जगृहे । असक्त आसक्तिरहित एव सुखमन्वभूत् शर्माऽलभत । तस्य दिलीपस्य भयहेतुकमात्मरक्षणं न, रोगहेतुकं धर्माचरणं न, लोभहेतुकं च धनग्रहणं न, आसक्त्या सुखलाभो नेत्यर्थः ।

( समासः । ) न त्रस्तोऽत्रस्तः । न आतुरोऽनातुरः । गृध्यतीति गृध्नुः न गृध्नुरगृध्नुः । न सक्तोऽसक्तः ॥ २१ ॥

*(ज्ञान इति)* ज्ञाने परकीयवृत्तान्तावबोधेऽपि मौनं वचननियमनम् । शक्तौ प्रतीकारसामर्थ्येऽपि क्षमा शान्तिः । त्यागे दाने सत्यपि श्लाघा-

विपर्यः आत्मप्रशंसनाभावः । इत्थं तस्य दिलीपस्य गुणा ज्ञानप्रभृतयो गुणानुबन्धित्वात् विरुद्धमौनादिसहचारित्वात् सप्रसवाः सोदरा इव आसन्निति क्रियाशेषः । स दिलीपः जानन्नपि परवृत्तान्तवादी न, समर्थोऽपि सहनशीलः, दाताऽपि नात्मप्रशंसीत्यर्थः ।

( समासः ) श्लाघाया विपर्ययः श्लाघाविपर्ययः । गुणैरनुबन्धित्वं गुणानुबन्धित्वं तस्मात् । सह प्रसवो येषां ते सप्रसवाः ॥ २२ ॥

*(अनाकृष्टस्येति)*विषयैः शब्दस्पर्शरूपरसगन्धैः अनाकृष्टस्य अनासक्तस्य विद्यानां वेदवेदाङ्गप्रभृतीनां पारदृश्वनः अन्तदर्शिनः धर्मरतेः सुकृतासक्तस्य तस्य राज्ञो दिलीपस्य जरसो विना वार्द्धक्यमन्तरा वृद्धत्वं वार्द्धक्यमासीदभूत् । अविषयी, अधीतसकलविद्यः, धर्मासक्तो दिलीपोऽवृद्धोऽपि वृद्ध इव बभूवेत्यर्थः ।

( समासः ) न आकृष्टोऽनाकृष्टस्तस्य । पारं दृष्टवान् पारदृश्वा तस्य । धर्मे रतिर्यस्य स धर्मरतिस्तस्य ॥ २३ ॥

*(प्रजानामिति)*स दिलीपः प्रजानां, विनयाधानात् रक्षणात् अवनात् भरणात् पोषणादपि पिता बभूव तासां प्रजानां पितरस्तु केवलं जन्महेतवः उत्पत्तिमात्रविधायका आसन् । दिलीपप्रजानां पितरः केवलं जन्मदातार एव शिक्षारक्षादिकर्ता दिलीप एवेति भावः ।

( समासः ) विनयस्याऽऽधानं विनयाधानं तस्मात् । जन्मनो हेतवो जन्महेतवः ॥ २४ ॥

*(स्थित्या इति)* दण्ड्यान् दण्डार्हान् स्थित्यै लोकप्रतिष्ठायै दण्डयतः शिक्षयतः । प्रसूतये पुत्रायैव परिणेतुः कृतोद्वाहस्य । मनीषिणो विदुषस्तस्य दिलीपस्य अर्थकामावपि धर्म एवास्ताम् । स दिलीपः दण्ड्यानां दण्डप्रदानात् सन्तानकामनयैव च दारपरिग्रहणाद्धर्मवत्तरो बभूवेत्यर्थः ।

( समासविग्रहौ ) दण्डमर्हन्ति ये ते दण्ड्यास्तान् । अर्थश्च कामश्च अर्थकामौ । मनस इषा मनीषा तस्य मनीषिणः ॥ २५ ॥

*(दुदोहेति )*स राजा दिलीपः यज्ञाय मखाय ( यज्ञं कर्तुमिति यावत् ) गां पृथ्वीं दुदोह करादानेन रिक्तां विदधौ । मघवा शक्रः सस्याय सस्यं सम्पादयितुं दिवं स्वर्गं दुदोह स्वर्गतो भुवि ववर्ष । उभौ दिलीपशक्रौ सम्पद्विनिमयेन यज्ञसस्ययोरादानप्रातदानेन भुवनद्वयं लोकोभयं दधतुः पुपुषतुः । कृतसख्याविव दिलीपशक्रौ यज्ञवृष्टिभ्यां लोकद्वयं ररक्षतुरित्यर्थः ।

( समासः ) सम्पदो विनिमयः सम्पद्विनिमयस्तेन । द्वयोर्भावो द्वयं भुवनयो र्द्वयं भुवनद्वयम् ॥ २६ ॥

*(नेति)*राजानोऽपरभूपतयो रक्षितुस्त्राणं कर्तुस्तस्य राज्ञो दिलीपस्य यशः कीर्त्तिं नानुययुः किल नानुचक्रुः खलु । यद्यतो हेतोः तस्करता तस्करव्यापारः ( चौर्यम् ) परस्वेभ्योऽन्यधनेभ्यो व्यावृत्ता निवृत्ता सती श्रुतौ श्रवण एव स्थिता स्थितिमलभत् । भयेभ्यस्त्रातरि दिलीपे राज्ञि सति न वस्तुतश्चौर्यमभूत्किन्तु चौर्यशब्दः केवलं लोकानां श्रवेण एवातिष्ठदित्यर्थः ।

( विग्रहः) राजन्ते शोभन्ते इति राजानः । रक्षतीति रक्षिता तस्य । तस्करस्य भावस्तस्करता ॥ २७ ॥

*(द्वेष्य इति)* तस्य राज्ञो दिलीपस्य आर्त्तस्य व्याधिग्रस्तस्य औषधं यथा भेषजमिव शिष्टः सुशीलो जनो द्वेष्योऽपि शत्रुरपि सम्मतः प्रिय आसीत् दुष्टो दुर्जनो जनः प्रियोऽपि स्निग्धोऽपि उरगक्षता व्यालदष्टा अङ्गुलीव त्याज्यो हेय आसीत । स दिलीपः शिष्टप्रियो दुष्टाप्रिय आसीदित्यर्थः ।

( विग्रहसमासौ ) द्वेष्टुं योग्यो द्वेष्यः । त्यक्तुं योग्यो त्याज्यः । उरगेण क्षता उरगक्षता ॥ २८ ॥

*(तमिति)* वेधा ब्रह्मा तं दिलीपं महाभूतसमाधिना महाप्राणिकारणसामग्र्या विदधे निर्ममे नूनमित्युत्प्रेक्षे । तथाहि तस्य दिलीपस्य सर्वे गुणाः परार्थैकफलाः अन्यप्रयोजनमुख्यफलका आसन् ।

( समासः ) महाभूताना समाधिर्महाभूतसमाधिस्तेन । परस्यार्थः परार्थः स एवैकं मुख्यं फलं येषां ते परार्थैकफलाः ॥ २९ ॥

*(स इति)* स दिलीपः वेलावप्रवलयां समुद्रकूलप्राकारवेष्टनां परिखीकृतसागरां दुर्गवेष्टनीभूतवारिधिम् अनन्यशासनाम् अविद्यमानतर दण्डाम् उर्वीं पृथ्वीं एकपुरीमिव शशास ररक्ष । स दिलीपः समुद्रपर्यन्त भूमेः शासनकर्त्ताऽऽसीदित्यर्थः ।

( समासः ) वेला एव वप्रलयाः यस्याः सा ताम् । न परिखा अपरिखा अपरिखाः परिखाः सम्पद्यमानाः परिखीकृताः परिखीकृताः सागरा यस्याः सा ताम् । नास्त्यन्यशासनं यस्याः सा ताम् । एका चासौ पुरी एकपुरी ताम् ॥ ३० ॥

*(तस्येति)*तस्य दिलीपस्य मगधवंशजा मगधकुलोत्पन्ना दाक्षिण्य रूढेन परच्छन्दानुवर्तनप्रसिद्धेन नाम्ना अध्वरस्य यज्ञस्य दक्षिणा तदा

ख्या पत्नीव सुदक्षिणेति प्रसिद्धा पत्नी स्त्री आसीत्। यज्ञस्य दक्षिणाख्या पत्नीव दिलीपस्य सुदक्षिणा पत्न्यासादित्यर्थः।

(समासः) मगधस्य वंशो मगधवंशस्तत्र जाता मगधवंशजा। दाक्षिण्येन रूढं दाक्षिण्यरूढं तेन ॥ ३१ ॥

*कलत्रेति* वसुधाधिपो दिलीपः अवरोधेऽन्तःपुरवर्गे महत्यपि अधिके सत्यपि मनस्विन्या पतिचित्तानुवर्त्तिन्या तया सुदक्षिणया लक्ष्म्या राजलक्ष्म्या च आत्मानं शरीरं कलत्रवन्तं सपत्नीकं मेने ज्ञातवान्। तस्य दिलीपस्य बहुषु स्त्रीवर्गेषु सत्स्वपि सुदक्षिणा लक्ष्मी च द्वे एव प्रिये आस्तामित्यर्थः।

(समासविग्रहौ) कलत्रमस्त्यस्येति कलत्रवान् तम्। मनोऽस्त्यस्या मनस्विनी तया। वसुधाया अधिपो वसुधाधिपः ॥ ३२ ॥

*तस्यामिति* स राजा दिलीपः आत्मानुरूपायां स्वयोग्यायां तस्यां सुदक्षिणायां फलैः चिरायितसुतप्राप्तिफलैः मनोरथैः लिप्साभिः कालं समयं निनाय व्यतीयाय। चित्तानुवर्तिन्यां सुदक्षिणायां पुत्रोत्पादनोत्कण्ठितो दिलीपो बहुसमयं यापयामासेत्यर्थः।

(समासः) आत्मनोऽनुरूपा आत्मानुरूपा तस्याम्। आत्मनो जन्म यस्यासावात्मजन्मा तस्मिन् समुत्सुकः। विलम्बितं फलं येषां ते विलम्बितफलास्तैः विलम्बितफलैः। मनांसि रथा इव मनोरथास्तै मनोरथैः ॥ ३३ ॥

*सन्तानेति* तेन राज्ञा दिलीपेन सन्तानार्थाय। पुत्रप्रयोजनाय विधयेऽनुष्ठानाय स्वभुजान्निजवाहोरवतारिताऽवरोपिता जगतो लोकस्यँ गुर्वी गुरुतरा धूर्भारः सचिवेषु मन्त्रिषु निचिक्षिपे निदधे। पुत्रफलकानुष्ठानं कर्तुमुत्सुको दिलीपो राज्यभारं मन्त्रिभ्यः समर्पितवानित्यर्थः।

(समासः) सन्तानोऽर्थो यस्य स सन्तानार्थस्तस्मै। स्वस्य भुजः स्वभुजस्तस्मात् ॥ ३४ ॥

*अथेति* अथाऽनन्तरं (धुरोऽवतारानन्तरं) पुत्रकाम्यया सन्तानेच्छया तौ दम्पती सुदक्षिणादिलीपौ प्रयतौ पूतौ सन्तौ विधातारं ब्रह्माणम् अभ्यर्च्य पूजयित्वा गुरोः कुलगुरोर्वशिष्ठस्य आश्रमं स्थानं जग्मतु र्ययुः। पुत्रेच्छया सुदक्षिणादिलीपौ ब्रह्माणं पूजयित्वा वशिष्ठाश्रमं ययुरित्यर्थः।

(विग्रहः) आत्मनः पुत्रेच्छा पुत्रकाम्या तया ॥ ३५ ॥

*स्निग्धेति* स्निग्धगम्भीरनिर्घोषं मधुरगुरुशब्दम् एकमद्वितीयं स्यन्दनं रथमास्थितावारूढौ सुदक्षिणादिलीपौ प्रावृषेण्यं वर्षाकालिकं पयोवाहं मेघमास्थितौ विद्युदैरावतौ तडिदभ्रमातङ्गाविव जग्मतुः। यथा मेघमारूढौ विद्युदैरावतौ तथैकरथमारूढौ तौ दम्पती जग्मतुरित्यर्थः।

(समासविग्रहौ) स्निग्धो गम्भीरो निर्घोषो यस्य स स्निग्धगम्भीरनिर्घोषः तम्। प्रावृषि भवः प्रावृषेण्यस्तम्। पयो वहतीति पयोवाट् तम्। अथवा पयोवहतीति पयोवाहः (कर्मण्यण) तम् ॥३६॥

*मेति* आश्रमपीडा वशिष्ठस्थानबाधा मा भूदिति हेतोः परिमेयपुरस्सरौ परिमितानुचरौ तौ दम्पती अनुभावविशेषात् प्रतापबाहुल्यात् सेनापरिवृतावधिकसैन्ययुक्ताविव दृश्यमानौ जग्मतुः। अल्पपरिचरावपि सुदक्षिणादिलीपौ तेजोबाहुल्यादधिकपरिचराविव दृश्यमानौ ययुरित्यर्थः।

(समासः) आश्रमस्य पीडा आश्रमपीडा। परिमातुं योग्याः परिमेयास्तथाभूताः पुरस्सरा ययोस्तौ। अनुभावस्य विशेषोऽनुभावविशेषस्तस्मात्। सेनाभिः परिवृतौ सेनापरिवृतौ ॥ ३७ ॥

*सेव्यमानाविति* सुखस्पर्शैः प्रियस्पर्शैः शालनिर्यासगन्धिभिः सर्जवृक्षोद्भूतगन्धवद्भिः पुष्परेणूत्किरैः कुसुमपरागविक्षेपकैः आधूतवनराजिभिः ईषत्कम्पितकाननपङ्क्तिभिर्वातैः वायुभिः सेव्यमानौ तौ दम्पती जग्मतुः। धर्मकार्यं कर्त्तुं गम्यमानौ सुदक्षिणादिलीपौ (कर्मभूतौ) वायुरपि सुखस्पर्शैः (करणभूतैः) आनन्दयामासेत्यर्थः।

(समासः) सुखः स्पर्शो येषां ते तैः। शालेभ्यो निर्यासा निस्यन्दा ये गन्धास्ते विद्यन्ते येषां ते तैः। पुष्पाणां रेणवः पुष्परेणवस्तेषामुत्किरास्तैः। आधूता वनराजयो यैस्ते तैः ॥ ३८ ॥

*मनोभिरिति* रथनेमिस्वनोन्मुखैः स्यन्दनचक्रशब्दोन्नमिताननैः शिखण्डिभि र्मयूरैः द्विधाभिन्ना द्वैधीभूताः षड्जसम्वादिनीः तन्त्रीकण्ठोद्भवस्वरविशेषसदृशीः अत एव मनोऽभिरामा हृदयप्रियाः केका मयूरवाणीः शृण्वन्तौ आकर्णयन्तौ जग्मतुः।

(समासः) रथस्य नेमिः रथनेमिस्तस्य स्वनस्तस्मादुदुन्नमितं मुखं येषां ते तैः। षड्जेन सम्वादिन्यः षड्जसम्वादिन्यस्ताः। मनसोऽभिरामा मनोऽभिरामास्ताः ॥ ३९ ॥

*परस्परेति* अदूरोज्झितवर्त्मसु समीपत्यक्तमार्गेषु स्यन्दनाबद्धदृष्टिषु रथासक्तनेत्रेषु मृगद्वन्द्वेषु हरिणमिथुनेषु परस्पराक्षिसादृश्यम् अन्योन्यनेत्रसादृश्यं पश्यन्तौ जग्मतुः। रथमार्गं परित्यज्य विश्रम्भा-

दनतिदूरे तिष्ठन्सु मृगमिथुनेषु दिलीपो मृगीषु सुदक्षिणाक्षिसादृश्यमपश्यत् । सुदक्षिणा च मृगेषु दिलीपाक्षिसादृश्यमपश्यदित्यर्थः ।

( समासः ) परस्परयोरक्षीणि परस्पराक्षीणि तेषां सादृश्यं परस्पराक्षिसादृश्यम् । अदूरमुज्झितं वर्त्म यैस्ते तेषु । स्यन्दने आबद्धे दृष्टी ययोस्तं तेषु । मृगाणां द्वन्द्वा मृगद्वन्द्वास्तेषु ॥ ४० ॥

*श्रेणीति* श्रेणीबन्धात्पङ्क्तिबन्धनात् अस्तम्भाम् आधारस्तम्भरहिताम् तोरणस्रजं वहिर्द्वारमालां वितन्वद्भिः विरचयद्भिः कलनिर्ह्रादैः मधुरस्वनैः सारसैः तदाख्यपक्षिविशेषैः ( करणैः ) क्वचित् उन्नमिताननौ उत्थापितमुखौ ।

( समासः ) श्रेण्या बन्धः श्रेणीबन्धस्तस्मात् । अविद्यमानः स्तम्भो यस्याः सा ताम् । तोरणस्य स्रक् तोरणस्रक् ताम् । कलो निर्ह्रादो येषां तैः । उन्नमितमाननं ययोस्तौ ॥ ४१ ॥

*पवनस्येति* प्रार्थनासिद्धिशंसिनो मनोरथसिद्धिसूचकस्य पवनस्य वायोरनुकूलत्वात् गन्तव्यदिगभिमुखत्वात् हेतोः । तुरगोत्कीर्णैः अश्वचरणोत्थैः रजोभिर्धूलिभिः अस्पृष्टालकवेष्टनौ असम्बद्धचूर्णकुन्तलोष्णीषौ ।

( समासः ) प्रार्थनायाः सिद्धिस्तस्याः संसूचकस्तस्य । तुरगैरुत्कीर्णास्तुरगोत्कीर्णास्तैः । अस्पृष्टेऽलकवेष्टने ययोस्तौ॥ ४२ ॥

*सरसीष्विति* सरसीषु तडागेषु ( जलाशयेषु ) वीचिविक्षोभशीतलम् तरङ्गसंघट्टनशैत्ययुक्तम् स्वनिःश्वासानुकारिणं निजनिःश्वासानुकरणशीलम् अरविन्दानाम् कमलानां आमोदं सौरभम् उपजिघ्रन्तौ नासिकया गृह्णन्तौ । तरङ्गसम्पर्कशीतलमरविन्दसौरभं नासिकया गृह्णन्तौ जग्मतुरित्यर्थः ।

( समासः ) वीचीनां विक्षोभो वीचिविक्षोभस्तेन शीतलस्तम् । स्वस्य निःश्वासः स्वनिश्वासस्तं कर्तुं शीलमस्य स्वनिश्वासानुकारी तम् ॥ ४३ ॥

*ग्रामेष्विति* आत्मविसृष्टेषु स्वदत्तेषु यूपचिन्हेषु संस्कृतदारुविशेषलक्षणेषु ग्रामेषु अमोघाः सफलाः यज्वनां याज्ञिकानाम् आशिषः आशीर्वादान् अर्घ्यानुपदम् अर्घ्यस्वीकारोत्तरं प्रतिगृह्णन्तौ स्वीकुर्वन्तौ । मार्गं गच्छन्तौ सुदक्षिणादिलीपौ विधिनेष्टवद्भ्यो ब्राह्मणेभ्यो दत्तेषु ग्रामेषु विद्यमानानां तेषामाशिषं जगृहतुरित्यर्थः ।

( समासः )आत्मना विसृष्टा आत्मविसृष्टास्तेषु । यूपा एव चिन्हानि येषु ते तेषां । न मोघा अमोघाः। अर्घ्यस्य अनुपदमर्घ्यानुपदम् ॥४४॥

*हैयङ्गवीनमिति* हैयङ्गवीनं ह्यस्तनगोदोहोद्भवघृतम् आदाय गृहीत्वा उपस्थितान् प्राप्तान् घोषवृद्धान् आभीरवृद्धान्प्रति वन्यानां वनोद्भवानां मार्गशाखिनाम् अध्ववृक्षाणां नामधेयानि नामानि पृच्छन्तौ। सुदक्षिणादिलीपौ दृष्ट्वा सद्योघृतमेवोपायनमादाय प्राप्तान् आभीरवृद्धान् प्रति किन्नामकोऽयं मार्गशाखी किन्नामकश्च स इत्येवं रूपेण जिज्ञास्यमानौ जग्मतुरित्यर्थः।

(समासविग्रहौ) ह्यः पूर्वेद्युर्भवं हैयङ्गवीनम्। घोषानां वृद्धा घोषवृद्धास्तान्। वने भवा वन्यास्तेषाम्। मार्गे शाखिनो मार्गशाखिनस्तेषाम्॥ ४५॥

*कापीति* व्रजतो गच्छतोः शुद्धवेषयोः प्रशस्तनेपथ्ययोस्तयोः चित्राचन्द्रमसोः चित्राख्यनक्षत्रचन्द्रयोरिव योगे सति कापि अनिर्वाच्या अभिख्या शोभा आसीदभूत्। यथा शिशिरापगमे चैत्र्यां चित्राचन्द्रमसौ शुशुभाते तथैव सुदक्षिणादिलीपावपीत्यर्थः॥

(समासः) शुद्धौ वेषो ययोस्तौ तयोः। हिमेन निर्मुक्तौ हिमनिर्मुक्तौ तयोः। चित्रा च चन्द्रमाश्च चित्राचन्द्रमसौ तयोः॥ ४६॥

*तत्तदिति* बुधोपमः बुधसदृशः अत एव प्रियदर्शनो मनोज्ञावलोकनो भूमिपति र्दिलीपः तत् तत् आश्चर्यवस्तु पत्न्यै सुदक्षिणायै दर्शयन् अवलोकयन् लङ्घितमतिवाहितमपि अध्वानं मार्गं न बुबुधे न ज्ञातवान्। सौम्याकृतिर्दिलीपो मार्गं गच्छन् सुदक्षिणायै अद्भुतवस्तून्यवलोकयन् कियद्दूरमागतोऽस्मीति न ज्ञातवानित्यर्थः।

(समासः) प्रियं दर्शनं यस्य सः। बुध उपमा यस्य सः। भूम्याः पति भूमिपतिः॥ ४७॥

*स इति* दुष्प्रापयशाः अन्यदुर्लभकीर्त्तिः श्रान्तवाहनोऽतिक्लान्तयुग्यः। महिषीसखः पत्नीसहायः स दिलीपः सायं सन्ध्यासमये संयमिनो नियमवतः तस्य महर्षेर्वशिष्ठस्य आश्रमं स्थानं प्रापत् प्राप्तवान्॥

(समासः) दुष्प्रापं यशो यस्य सः। श्रान्ता वाहना यस्य सः। संयमोऽस्त्यस्येति संयमी तस्य। महांश्चासौ ऋषिर्महर्षिस्तस्य। महिष्याः सखा महिषीसखः॥ ४८॥

आश्रमं विशिनष्टि—

*वनान्तरादिति* वनान्तरादन्यस्माद्वनात् उपावृत्तैः प्रत्यावृत्तैः (प्रत्यागतैः) समित्कुशफलाहरैः काष्ठदर्भफलाहरणशीलैः अदृश्याग्नि-

प्रत्युद्यातैः वैतानिकानलप्रत्युद्गतैः तपस्विभिर्मुनिभिः पूर्यमाणं व्याप्तमाश्रमं प्रापदित्यन्वयः ।

(समासः) अन्यद्वनं वनान्तरं तस्मात् । समिधश्च कुशांश्च फलानि-चाहर्तुं शीलमेषां ते तैः । अदृश्याश्च तेऽग्नयोऽदृश्याग्नयस्तैः प्रत्युद्याता अदृश्याग्निप्रत्युद्यातास्तैः । तपोऽस्त्येषामिति तपस्विनस्तैः ॥ ४९ ॥

*आकीर्णमिति* नीवारभागधेयोचितैः नीवारांशभागिभिः (अत एव) उटजद्वाररोधिभिः पर्णशालाद्वारावरोधकैः मृगैर्हरिणैः ऋषिपत्नीनां मुनिस्त्रीणामपत्यैः सुतैरिव आकीर्णं व्याप्तम् ।

(समासः) नीवारस्य भागधेयो नीवारभागधेयस्तत्रोचितास्तैः । उटजानां द्वाराणि उटजद्वाराणि तानि रोद्धुं शीलमस्त्येषां ते उटजद्वाररोधिनस्तैः ॥ ५० ॥

*सेकान्त इति* सेकान्ते तरुमूलसेचनावसाने मुनिकन्याभिः ऋषिसुताभिः ( कर्त्रीभिः ) आलवालाम्बुपायिनाम् जलावापप्रदेशस्थजलपानकर्तॄणां विहङ्गानां पक्षिणां विश्वासाय विश्रम्भाय तत्क्षणोज्झितवृक्षकम् सेचनसमयत्यक्तह्रस्वतरुम् । महर्षेराश्रमं प्रापदित्यन्वयः । यस्मिन्नाश्रमे मुनिपुत्रीभिः कृते तरुमूलसेचने तदा जलं पातुमुपस्थिताः पक्षिणो विश्वस्ताः सन्तो जलं पिबेयुरिति बुद्ध्या तांस्तरुप्रदेशान् त्यक्तवत्य इत्यर्थः ।

( समासः ) तत्क्षणे उज्झिता वृक्षका ह्रस्ववृक्षा यस्मिन् स तम् । आलवालेषु अम्बु आलवालाम्बु तत्पातुं शीलमस्त्येषां ते आलवालाम्बुपायिनस्तेषाम् ॥ ५१ ॥

*आतपेति* आतपात्ययसंक्षिप्तनीवारासु घर्मापगमराशीकृततृणधान्यासु उटजाङ्गनभूमिषु पर्णशालाचत्वरभागेषु निषादिभिरुपविष्टैः मृगैर्हरिणैर्वर्तितरोमन्थं निष्पादितचर्वितचर्वणम् आश्रमं प्रापदित्यन्वयः ।

( समासः ) आतपस्याऽत्यय आतपात्ययः तस्मिन् संक्षिप्ता नीवारा यासु तास्तासु । अङ्गनस्य भूमयोऽङ्गनभूमयः उटजानामङ्गनभूमय उटजाङ्गनभूमयस्तासु । निसीदितुशीलमस्त्येषां ते निषादिनस्तैः । वर्तितो रोमन्थो यस्मिन् स तम् ॥ ५२ ॥

*अभ्युत्थितेति* अभ्युत्थिताग्निपिशुनैः प्रज्वलितानलसूचकैः पवनोद्धूतैः वायुप्रेरितैः आहुतगन्धिभिः आहुतिसौरभशालिभि धूमैः आश्रमोन्मुखान् कुटीम्पश्यतः अतिथीन् अभ्यागतान् पुनानं पवित्रीकुर्वाणम् । मुनिकृतहोमधूमसौरभेणाभ्यागतान् पावयन्तमाश्रम्प्रापदित्यर्थः ।

( समासः ) अभ्युत्थिताश्च तेऽग्नयोऽभ्युत्थिताग्नयस्तेषां पिशुनास्तैः । पवनैरुद्धूताः पवनोद्धूतास्तैः । आहुतिगन्धोऽस्त्येषां ते आहुतिगन्धिनस्तैः । आश्रमे उन्मुखा आश्रमोन्मुखास्तान् ॥ ५३ ॥

*अथेति* अथ आश्रमप्राप्त्युत्तरं स राजा दिलीपः यन्तारं सारथिं धुर्यान् रथाश्वान् विश्रामयेत्यादिश्य तां सुलक्षणलक्षितां ( पतिभक्तिमतीं ) पत्नीं सुदक्षिणां रथात् स्यन्दनात् अवारोहयत् अवतारितवान् स्वयञ्चावततार । आश्रमप्राप्त्युत्तरं दिलीपोऽश्वाध्वश्रमापनयनाय सारथिमाज्ञाप्य सपत्नीकोऽवातरदित्यर्थः ।

( विग्रहः ) धुरं वहन्तीति धुर्याः ॥ ५४ ॥

*तस्मा इति* सभ्याः सभायां साधवः गुप्ततमेन्द्रियाः अत्यन्तनियमितविषयाः मुनयः ऋषयः सभार्याय सस्त्रीकाय गोप्त्रे रक्षकाय नयचक्षुषे शास्त्रदृष्टयेऽत एवाऽर्हते प्रशस्ताय तस्मै दिलीपाय अर्हणां पूजां चक्रतुर्विदधिरे । वसिष्ठानुमत्या मुनयो दिलीपं पूजयामासुरित्यर्थः ।

( समासविग्रहौ ) सभायां साधवः सभ्याः । गुप्ततमानि इन्द्रियाणि येषां ते गुप्ततमेन्द्रियाः । भार्यया सहितः सभार्यस्तस्मै । नयश्चक्षुर्यस्य स तस्मै ॥ ५५ ॥

*विधेरिति* स राजा दिलीपः सायन्तनस्य सायम्भवस्य विधेर्जपहोमाद्यनुष्ठानस्यान्तेऽवसाने अरुन्धत्या अन्वासितमुपसेवितं तपोनिधिं वसिष्ठं स्वाहया स्वाहादेव्या अन्वासितं सेवितं हविर्भुजं वह्निमिव ददर्श अवलोकयामास । सायंविध्यवसाने दिलीपः स्वाहादेवीसेवितमग्निमिवारुन्धतीसेवितवसिष्ठमपश्यदित्यर्थः ।

( विग्रहसमासौ ) सायम्भवः सायन्तनस्तस्य । नितरां धीयतेऽस्मिन्निति निधिस्तपसां निधिस्तपोनिधिस्तम् । हविर्भुनक्तीति हविर्भुक् तम् ॥ ५६ ॥

*तयोरिति* मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा दिलीपश्च तयोरुन्धतीवसिष्ठयोः पादान् चरणान् जगृहतुः आददतुः गुरुपत्नी गुरुश्च ( कर्तृभूतौ ) तौ सुदक्षिणादिलीपौ ( कर्मभूतौ ) प्रीत्या हर्षेण प्रतिनन्दतुः आशिषा सम्भावयाञ्चक्रतुः । अरुन्धतीवसिष्ठौ सुदक्षिणादिलीपयोरभिवादनमङ्गीकृत्य तौ शुभाशीर्वादेन योजयामासतुरित्यर्थः ।

( विग्रहः ) मगधस्याऽपत्यं स्त्री मागधी । सा च स च तौ ॥५७॥

*तमिति* मुनिर्वसिष्ठः आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमं अभ्यागतसत्कारव्यापारनिवृत्तस्यन्दनसञ्चलनखेदम् राज्याश्रममुनिं राज्यरूपाश्रमे मुनितुल्यं तं दिलीपं राज्ये राज्यविषये कुशलं मङ्गलं पप्रच्छ

पृच्छति स्म । वसिष्ठ(श्रम)मुनिकृतातिथ्येन निवृत्ताध्वश्रमं दिलीपं मुनिः कुशलं पृच्छति स्मेत्यर्थः।

( समासः ) आतिथ्यस्य क्रिया आतिथ्यक्रिया तया शान्तो रथक्षोभेण परिश्रमो यस्य स तम् । राज्याश्रमे मुनिः राज्याश्रममुनिस्तम ॥५८॥

*अथेति* अथ प्रश्नोत्तरं विजितारिपुरः स्वायत्तीकृतशत्रुनगरः वदतां वक्तॄणां वरः श्रेष्ठः अर्थपतिः राजा अथर्वनिधेः अथर्ववेदपारावारस्य तस्य मुनेर्वसिष्ठस्य पुरोऽग्रेऽर्थ्यामर्थोपेतां वाचं वाणीमाददे जगाद । मुनिप्रश्नमाकर्ण्य दिलीप उत्तरयामासेत्यर्थः।

( समासः ) विजितमरिपुरं येन सः । अथर्वस्य निधिरथर्वनिधिः । अर्थादनपेताऽर्थ्या ताम ॥ ५९ ॥

*उपपन्नामति* हे गुरो इति सम्बोधनपदमध्याहार्यम् । सप्तसु अङ्गेषु स्वाम्यमात्यादिषु शिवं कुशलमुपपन्नं युक्तमस्तीति शेषः । यतः यस्य मे मम दैवीनां देवेभ्य आगतानां मानुषीणां मनुष्येभ्य आगतानां च आपदां दुःखानां त्वं प्रतिहर्ता निवारकोऽसीति शेषः । दैवीमानुषीप्रभृतिदुःखनिवारके त्वयि विद्यमाने कुतो न कुशलमस्मद्राज्ये इत्यर्थः ।

( विग्रहः ) देवेभ्य आगता दैव्यस्तासाम् । मनुष्येभ्य आगता मानुष्यस्तासाम् ॥ ६० ॥

*तवेति* दूरात् परोक्ष एव प्रशमितारिभिः विनाशितशत्रुभिः मन्त्रकृतो मन्त्रस्रष्टुस्तव भवतो मन्त्रैः ( कर्तृभिः ) दृष्टलक्ष्यभिदः प्रत्यक्षलक्ष्यभेत्तारो मे मम शरा बाणाः प्रत्यादिश्यन्त इव निराक्रियन्त इव । हे गुरो भवन्मन्त्रेण दर्शितस्य लक्ष्यस्य भेदने समर्था मम बाणा एव विपदां निवारकाः सन्तीत्यर्थः ।

( समासः ) प्रशमिता अरयो यैस्ते प्रशमितारयस्तैः। मन्त्रं करोतीति मन्त्रकृत तस्य। दृष्टं च तल्लक्ष्यं च दृष्टलक्ष्यं तद्भिन्दन्तीति दृष्टलक्ष्यभिदः॥६१॥

*हविरिति* हे होतः, त्वया भवता विधिवत् यथाविधि अग्निषु वन्हिषु आवर्जितं प्रक्षिप्तं ( दत्तं ) हविराज्यादिकं ( कर्तृ ) अवग्रहविशोषिणां वर्षप्रतिबन्धविशुष्यतां सस्यानां वृष्टि र्वर्षणं भवति । भवता वन्हौ प्रक्षिप्ताज्यादिकस्य वृष्टिरूपेण सस्योपजीवकत्वात्कुतोऽस्मद्राज्ये क्लेशसम्भव इति भावः ।

(समासः) अवग्रहेण विशोष्टुं शीलमेषां तेऽवग्रहविशोषिणस्तेषाम॥६२॥

*पुरुषेति* तदीयाः प्रजाः पुरुषायुषजीविन्यः वर्षशतं जीवनशीलाः निरातङ्काः निर्भयाः निरीतयोऽतिवृष्ट्यादिरहिताः सन्तीति यत् तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसम्पत्तिरेव हेतुः कारणम् ।

( समासविग्रहौ ) पुरुषायुषं जीवन्तीति पुरुषायुषजीविन्यः । आतङ्कान्निष्क्रान्ता निरातङ्काः । ईतेर्निष्क्रान्ता निरीतयः । ब्रह्मणो वर्चो ब्रह्मवर्चसम् तव ब्रह्मवर्चसं त्वद्ब्रह्मवर्चसम् ॥ ६३ ॥

*त्वयेति* ब्रह्मयोनिना विधिपुत्रेण गुरुणा पूज्येन त्वया भवता एवमुक्तप्रकारेण चिन्त्यमानस्य स्मर्यमाणस्य ( अत एव ) निरापदो दुःखरहितस्य मे मम सम्पदः सम्पत्तयः साऽनुबन्धाः अविच्छिन्नाः कथं न स्युः स्युरेव । भवता स्मर्यमाणस्य मे कुतो दुःखं कुतो न सम्पत्तिश्चेति भावः ॥

( समासविग्रहौ ) चिन्त्यते इति चिन्त्यमानः । ब्रह्मा योनिर्यस्य स तेन। अनुबन्धेन सहिताः साऽनुबन्धाः। आपदो निष्क्रान्ता निरापदः॥६४॥

*किन्त्विति* किन्तु तव भवतः एतस्याममुष्यां वध्वां स्नुषायाम् अदृष्टसदृशप्रजम् अनवलोकितानुरूपसुतं मां सद्वीपा रत्नसूः रत्नोत्पादिकाऽपि मेदिनी पृथिवी न अवति न सन्तोषयति । पुत्राभावाद्रत्नप्रभवाऽपि पृथिवी न मे रोचते इति भावः ।

( समासः ) अदृष्टा सदृशी प्रजा येन स तम् । द्वीपेन सहिता सद्वीपा । रत्नानि सूयते इति रत्नसूः ॥ ६५ ॥

*नूनमिति* मत्तः परं मदनन्तरं पिण्डविच्छेददर्शिनः पिण्डदानविच्छेद ( वियोग ) मुत्प्रेक्षमाणाः वंश्याः वंशोद्भवाः ( पितरः ) स्वधासङ्ग्रहतत्पराः पितृभोज्यसञ्चयासक्ताः सन्तः श्राद्धे पितृकर्मणि प्रकामभुजः पर्याप्तभोजिनो न भवन्ति । अपुत्रं मां विलोक्यातः परं न पिण्डप्राप्तिसम्भव इति विचार्य पितरो न श्राद्धे भोक्तुमुत्सहन्ते इत्यर्थः ।

( समासविग्रहौ ) वंशे भवा वंश्याः । पिण्डस्य विच्छेदः पिण्डविच्छेदस्तं द्रष्टुं शीलमेषां ते पिण्डविच्छेददर्शिनः । स्वधायाः सङ्ग्रहः स्वधासङ्ग्रहस्तस्मिन् तत्पराः । प्रकामं भुञ्जते इति प्रकामभुजः ॥ ६६ ॥

*मदिति* मत्परं मदनन्तरं दुर्लभं दुष्प्रापं मत्वा विज्ञाय मयाऽऽवर्जितं दत्तं पयो जलं पूर्वैः पितृभिः स्वनिश्श्वासैः दुःखोत्पन्नैः श्वासवायुभिः ( कारणभूतैः ) कवोष्णं किञ्चिदुष्णमुपभुज्यते पीयते । मद्दत्तं जलं मदुत्तरं पिण्डजलप्रदस्याभावादाधिजन्यनिःश्वासैरुष्णीभूतं पीयते पितृभिरित्यर्थः ।

( समासविग्रहौ ) स्वस्य निश्श्वासाः स्वनिश्श्वासास्तैः । ईषदुष्णम् कवोष्णम् ॥ ६७ ॥

* स इति* इज्याविशुद्धात्मा यागपूतान्तःकरणः प्रजालोपनिमी-

लितः सन्तत्यभावकृतनेत्रसङ्कोचः सोऽहम् लोकालोकश्चक्रवालोऽचलः पर्वत इव प्रकाशोऽप्रकाशश्चास्मि देवर्णविमोचनात्प्रकाशः पित्रर्णाविमोचनादप्रकाश इति बोध्यम् । सर्वसम्पद्युक्तोऽप्यहं पित्रर्णाविमोचनाद्दुःखितोऽस्मीति भावः ।

( समासः ) इज्यया विशुद्ध आत्मा यस्य सः । प्रजालोपेन निमीलितः प्रजालोपनिमीलितः ॥ ६८ ॥

*लोकान्तरेति* तपोदानसमुद्भवं व्रतादिदानोत्पन्नं पुण्यं यत् तत् लोकान्तरसुखं परलोकसुखजनकम् । शुद्धवंश्या शुद्धवंशोद्भवा सन्ततिः पुत्रादि हि परत्र परलोके इह चास्मिल्लोँके शर्मणे सुखाय भवतीति शेषः । पुण्यस्य परलोकसुखकरत्वात्सन्ततेस्तूभयलोकसुखकरत्वात्पुण्यापेक्षया सन्ततिरेव श्रेयस्करीति भावः ।

( समासः ) तपश्च दानं च तपोदाने ताभ्यां समुद्भवं तपोदानसमुद्भवम् । सुखयतीति सुखं लोकान्तरे सुखं लोकान्तरसुखम् । शुद्धवंशे भवा शुद्धवंश्या ॥ ६९ ॥

*तयेति* हे विधातः हे विश्वसृट् तया सन्तत्या हीनं रहितं मां स्नेहात्प्रेम्णा स्वयमात्मना सिक्तं पयोदानेन बर्द्धितं बन्ध्यमफलम् आश्रमवृक्षकं वृक्षपोतमिव पश्यन्नवलोकमानः ( त्वं ) कथं कुतो न दूयसे परितप्यसे । यथाऽऽत्मना बर्द्धितमफलमाश्रमवृक्षपोतमवलोक्य परितापस्तथाऽपुत्रं मां बिलोक्य कथं नु परिताप इत्यर्थः ।

( समासः ) ह्रस्वो वृक्षो वृक्षक आश्रमस्य वृक्षक आश्रमवृक्षकस्तम् ७०

*असह्येति* हे भगवन् मे मम अन्त्यं द्वितीयं ऋणं पित्रर्णम् अनिर्वाणस्याऽस्नातस्य दन्तिनो हस्तिनः अरुन्तुदं मर्मस्पृशम् । आलानं बन्धनस्तम्भमिव असह्यपीडं दुःसहदुःखकरमवेहि जानीहि ।

( समासः ) अन्ते भवमन्त्यम् । असह्या पीडा यस्य तत् । अरुन्तुदतीति अरुन्तुदम् । न निर्वाणोऽनिर्वाणस्तस्य ॥ ७१ ॥

*तस्मादिति* हे तात हे गुरो, तस्मात्पैतृकर्णात् यथा येन प्रकारेण मुच्ये मुक्तो भवामि तथा संविधातुं कर्तुमर्हसि । हि यतः इक्ष्वाकूणामिक्ष्वाकुकुलोत्पन्नानां राज्ञां दुरापे दुष्प्रापेऽर्थे सिद्धयस्त्वदधीनास्त्वदायत्ताः सन्तीति शेषः । इक्ष्वाकुवंशोद्भवराजसिद्धीनां त्वदायत्तत्वात्पित्रर्णान्मां समुद्धरेत्यर्थः ।

( समासः ) तवाऽधीनास्त्वदधीनाः ॥ ७२ ॥

*इतीति* इतीत्थं राज्ञा दिलीपेन विज्ञापितः बोधितः ( प्रार्थितः )

ऋषिर्वसिष्ठः ध्यानस्तिमितलोचनः चिन्तननिश्चलाक्षः ( सन् ) क्षणमात्रं मुहूर्तपर्यन्तं सुप्तमीनो निद्रितमत्स्यो ह्रदो जलाशय इव तस्थौ स्थितवान् । ऋषि नेत्रे निमील्य दिलीपस्य पुत्राभावहेतुं चिन्तयामासेत्यर्थः ।

( समासः ) ध्यानेन स्मिमिते लोचने यस्य सः । सुप्ता मीना यस्मिन् सः ॥ ७३ ॥

*स इति* स मुनिर्वसिष्ठः प्रणिधानेन चित्तैकाग्र्येण भावितात्मा शुद्धान्तःकरणः भुवः पृथिव्या भर्त्तुः स्वामिनो दिलीपस्य सन्ततेः पुत्रादेः स्तम्भकारणं प्रतिबन्धहेतुम् अपश्यत् दृष्टवान् अथानन्तरं एनं दिलीपं प्रत्यबोधयत् ज्ञापितवान् । ऋषि ध्यानेन नृपतिसन्ततिप्रतिबन्धहेतुं स्वयं विज्ञाय तं बोधयामासेत्यर्थः ।

( समासः ) स्तम्भस्य कारणं स्तम्भकारणम् । भावित आत्मा यस्य सः ॥ ७४ ॥

*पुरेति* पुरा पूर्वं शक्रं मघवानम् उपस्थाय्य संसेव्योर्वींप्रति भूमिमुद्दिश्य यास्यतो गमिष्यतस्तव भवतः पथि मार्गे कल्पतरुच्छायाम् सुरवृक्षच्छायाम् आश्रिता सेविता सुरभिः कामधेनुः आसीत् स्थिता बभूव । शक्रपुराद्भुवमागच्छता त्वया पथि सुरभिर्ददृशे इत्यर्थः ।

( समासः ) कल्पतरोश्छाया कल्पतरुच्छाया ताम् ॥ ७५ ॥

*धर्मेति* ऋतुस्नाताम् पुष्पनिमित्तककृतसवनाम् इमां राज्ञीं सुदक्षिणां धर्मलोपभयात् ऋत्वभिगमनात्मकधर्मविनाशभीत्या स्मरन् चिन्तयन् प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां कामधेन्वां त्वं साधु प्रदक्षिणादिरूपसत्कारं नाचरः न कृतवानसि । पथि दृष्टाऽपि कामधेनुः ऋतुगमनधर्मभ्रंशभीतेन त्वया नाभिवन्दितेत्यर्थः ।

( समासः ) धर्मस्य लोपो धर्मलोपस्तस्माद्भयं धर्मलोपभयं तस्मात् । ऋतुना स्नाता ऋतुस्नाता । प्रदक्षिणक्रियाया अर्हा प्रदक्षिणार्हक्रिया तस्याम् ॥ ७६ ॥

*अवजानासीति* यस्मात् यतः कारणात् माम् अवजानासि तिरस्करोषि अतोऽस्माद्धेतोः मत्प्रसूतिं मम सन्ततिम् अनाराध्य असेवयित्वा ते तव प्रजा सन्तति र्न भविष्यति नोत्पत्स्यते इति सा सुरभिस्त्वां शशाप आक्रुष्टवान् । मत्तिरस्कारापराधेन मत्तनुजासेवनमन्तरा न ते सन्ततिरुत्पत्स्यते इत्यर्थः ।

( समासः ) मम प्रसूतिर्मत्प्रसूतिस्ताम् ॥ ७७ ॥

*स इति* हे राजन् उद्दामदिग्गजेऽबद्धदिङ्मातङ्गे आकाशगङ्गायाः मन्दाकिन्याः स्रोतसि प्रवाहे नदति शब्दायमाने सति स शाप आक्रोशः

त्वया सारथिना च न श्रुत आकर्णितः । प्रवाहशब्दतः सुरभिशब्दस्य तिरोभूतत्वान्न त्वया श्रुत इत्यर्थः ।

( समासः ) दाम्न उद्गता उद्दामाः तथाभूता दिग्गजा यस्मिस्तत् उद्दामदिग्गजं तस्मिन् ॥ ७८ ॥

*ईप्सितमिति* तदवज्ञानात् धेनोस्तिरस्कारात् आत्मनः स्वस्य ईप्सितं मनोरथं सार्गलं सप्रतिबन्धं विद्धि जानीहि । हि तथाहि पूज्य-पूजाव्यतिक्रमः सेव्यार्चनातिक्रमणं श्रेयः कल्याणं प्रतिबन्धाति निवर्त्तयति।

( समासः ) तस्या अवज्ञानं तदवज्ञानं तस्मात् । अर्गलेन सहितं सार्गलम् । पूज्यस्य पूजा पूज्यपूजा तस्या व्यतिक्रमः पूज्यपूजाव्यतिक्रमः ॥ ७९ ॥

*हविष इति* सा च सुरभिः कामधेनुः इदानीं सम्प्रति दीर्घसत्रस्य चिरकालसाध्ययागविशेषस्य प्रचेतसो वरुणस्य हविषे दध्याज्यादिहविरर्थं भुजङ्गपिहितद्वारं सर्पावरुद्धद्वारं पातालं तन्नामलोकमधितिष्ठति वर्तते । सम्प्रति वरुणयागसम्पादनाय पाताललोके कामधेनुस्तिष्ठतीत्यर्थः ।

( समासः ) दीर्घं सत्रं यस्य स दीर्घसत्रस्तस्य । भुजङ्गैः पिहितो द्वारो यस्य स भुजङ्गपिहितद्वारस्तम् ॥ ८० ॥

*सुतामिति* तदीयां सुरभिसम्बन्धिनीं सुतां पुत्रीं सुरभेः कामधेनोः प्रतिनिधिं तत्स्थानापन्नां कृत्वा विधाय शुचिः पवित्रः सपत्नीकः सस्त्रीकः सन् आराधय सेवय हि यतः सा कामधेनुसुता प्रीता सन्तुष्टा सती कामदुघा ईप्सितफलप्रदा भवतीति शेषः । कामधेनोरभावे तत्सुतां शुश्रूषस्व सैव तवेप्सितं साधयिष्यतीत्यर्थः ।

( विग्रहसमासौ ) तस्या इयं तदीया ताम् । सह पत्नी यस्य सः । कामं दुह्यतीति कामदुघा ॥ ८१ ॥

*इतीति* इतीत्थं वादिनो वदत एव होतुर्हवनशीलस्यास्य मुनेराहुतिसाधनमाहुतिकारणं नन्दिनीनाम अनिन्द्या प्रशस्ता धेनुर्वनादावृते प्रत्याजगाम । दिलीपम्प्रति नन्दिनीसेवाकथनावसर एव नन्दिनी समुपतस्थावित्यर्थः ।

( समासः ) आहुतेः साधनमाहुतिसाधनम् । न निन्द्याऽनिन्द्या ॥८२॥

*ललाटेति* पल्लवस्निग्धपाटला किसलयचिक्कणपाटलवर्णा ललाटोदयं भालोद्भूतं आभुग्नम् ईषद्वक्रं श्वेतरोमाङ्कं शुभ्रलोमचिन्हं बिभ्रती धारयन्ती नवम् अल्पकलम् शशिनं चन्द्रं बिभ्रती सन्ध्या इव

स्थिता। द्वितीयाचन्द्रं धारयन्ती सन्ध्येव पाटलवर्णा नन्दिनी ललाटे ईषद्वक्रं रोमाचिन्हं धारयन्ती मुनिसन्निधौ तस्थावित्यर्थः।

( समासः ) ललाटे उदयो यस्य तत्। ईषद्भुग्नमाभुग्नम्। पल्लववत्स्निग्धा चासौ पाटला चेति पल्लवस्निग्धपाटला श्वेतानि च तानि रोमाणि श्वेतरोमाणि तेषामङ्कं श्वेतरोमाङ्कम् ॥ ८३ ॥

*भुवमिति* कोष्णेन ईषदुष्णेन अवभृथात् यज्ञस्नानादपि मेध्येन पवित्रीभूतेन वत्सालोकप्रवर्तिना वत्सदर्शनप्रवहता प्रस्रवेन क्षीराभिस्यन्दनेन भुवं पृथिवीमभिवर्षन्ती सिञ्चन्ती कुण्डोध्नी आपीनस्तना अतिक्षीरवतीत्यर्थः।

( विग्रहसमासौ ) ईषदुष्णं कोष्णं तेन। वत्सस्यालोको वत्सालोकस्तेन प्रवर्तितुं शीलमस्येति वत्सालोकप्रवर्ती तेन ॥ ८४ ॥

*रज इति* खुरोद्धूतैश्चरणोत्थैः अन्तिकात्समीपे गात्रं शरीरं स्पृशद्भिः प्राप्नुवद्भिः रजःकणैः धूलिकणिकाभिः महीक्षितो राज्ञः तीर्थाभिषेकजां तीर्थस्नानोद्भवां शुद्धिं पवित्रताम् आदधाना कुर्वाणा। इयं कामधेनुसुता नन्दिनी चरणधूलिकाभि र्निकटवर्त्तिनं पवित्रयतीत्यर्थः।

( समासः ) रजसां कणा रजःकणास्तैः। खुरैरुद्धूताः खुरोद्धूतास्तैः तीर्थेऽभिषेकस्तीर्थाभिषेकस्तस्माज्जाता तीर्थाभिषेकजा ताम्। महीं क्षियते इति महीक्षित् तस्य ॥ ८५ ॥

*तामिति* निमित्तज्ञः शकुनवित् तपोनिधिर्वसिष्ठः पुण्यदर्शनां पवित्रावलोकनां तां धेनुं दृष्ट्वा विलोक्य आशंसितावन्ध्यप्रार्थनं मनोरथसफलनिवेदनं याज्यं याजयितुं योग्यं पार्थिवम्प्रति पुनर्भूयोऽब्रवीत् जगाद। शकुनज्ञो मुनि र्धेनुं विलोक्य दिलीपमुवाचेत्यर्थः।

( समासः ) निमित्तं जानातीति निमित्तज्ञः। तपसां निधिस्तपोनिधिः। पुण्यं दर्शनं यस्याः सा पुण्यदर्शना ताम्। आशंसितेऽबन्ध्या प्रार्थना यस्य स आशंसितावन्ध्यप्रार्थनस्तम्। याजयितुं योग्यो याज्यस्तम् ॥ ८६ ॥

*अदूरवर्तिनीमिति* आत्मनः कार्यस्य ( स्वस्य ) सिद्धिम् उपपत्तिम् अदूरवर्तिनीम् अचिरभाविनीं विद्धि जानीहि यत् यस्मात्कारणात् कल्याणी मङ्गलमूर्त्तिः इयमेषा धेनुः नाम्नि अभिधाने कीर्त्तिते कथिते सत्येव उपस्थिता प्राप्ता। नाम्नः कथनादेव धेनोरुपस्थितौ शीघ्रं कार्यसिद्धिं जानीहीत्यर्थः।

( समासः ) दूरे वर्तितुं शीलमस्याः सा दूरवर्तिनी न दूरवर्तिनी अदूरवर्तिनी ताम् ॥ ८७ ॥

*वन्येति* वन्यवृत्तिः कन्दमूलाद्याहारः सन् इमां गां नन्दिनीं शश्वत् सर्वदा आत्मानुगमनेन स्वानुसरणेन अभ्यसनेन अभ्यासेन विद्यामिव प्रसादयितुं प्रसन्नीकर्तुम् अर्हसि योग्योऽसि । फलाहारी भूत्वा गामिमां सेवस्वेत्यर्थः ।

( समासः ) वने भवं वन्यं तद्वृत्तिर्यस्य स वन्यवृत्तिः । आत्मनोऽनुगमनमात्मानुगमनं तेन ॥ ८८ ॥

*प्रस्थितायामिति* अस्यां धेन्वां प्रस्थितायां प्रयातायां प्रतिष्ठेथाः प्रयाहि स्थितायां अकृतगमनायां स्थितिमाचरेः स्थितिं कुरु । निषण्णायामुपाविष्टायां निषीद समुपविश पीताम्भसि पीतजलायां सत्यां अपः जलं पिब । त्वमस्याश्छायेवानुसरेत्यर्थः ॥८९॥

*वधूरिति* वधूर्जाया भक्तिमती प्रयता संयता सती पुष्पमाल्यादिभिरर्चितां पूजितामेनां गाम् प्रातः आतपोवनात् तपोवनं मर्यादी कृत्य अन्वेतु अनुगच्छतु सायमपि सन्ध्याकालेऽपि प्रत्युद्व्रजेत् प्रत्युद्गच्छेत् । प्रातः सायं चानुसरणेन सेवां करोत्वित्यर्थः ।

( विग्रहः ) भक्तिरस्त्यस्याः सा भक्तिमती ॥ ९० ॥

*इत्थेति* इत्यनेन प्रकारेण त्वं भवान् आप्रसादात प्रसादपर्यन्तं अस्या धेनोः परिचर्यापरः शुश्रूषासक्तो भव । ते तव अविघ्नं विघ्नाऽभावोऽस्तु भवतु पितेव पुत्रिणां सत्पुत्रवतां धुर्यग्रे स्थेयाः तिष्ठेः । यावदेषा प्रसीदेत्तावदिमां सेवस्व । अत्र विघ्नो न बाधेत । पिता इव पुत्रवान् भवेत्यर्थः ।

( समासः ) परिचर्यायां परः परिचर्यापरः । विघ्नस्याऽभावोऽविघ्नम् । पुत्राऽस्त्येषामिति पुत्रिणस्तेषाम् ॥ ९१ ॥

* तथेतीति * देशकालज्ञः अग्निसन्निध्यग्निहोत्रावसानकालवित् ( आर्षवचनं तथ्यमिति जानन् ) अत एव प्रीतान् प्रसन्नः शिष्योऽन्तेवासी दिलीपः सपरिग्रहः सस्त्रीकः आनतो विनयनम्रः सन् शाशितु र्वसिष्ठस्यादेशमाज्ञां तथेति प्रतिजग्राह स्वचिकार ऋषिवचनस्य सत्यतामवगच्छन् दिलीपो गुरोरादेशं स्वीचकारेत्यर्थः ।

( समासः ) परिग्रहेण सहितः सपरिग्रहः । देशश्च कालश्च देशकालौ तौ जानातीति देशकालज्ञः ॥ ९२ ॥

*अथेति* अथानन्तरं प्रदोषे रात्रौ दोषज्ञः पण्डितः सुनृतवाक् तथ्यमनोज्ञवचनः स्रष्टुर्ब्रह्मणः सूनुः पुत्रो वसिष्ठः उदितश्रियम् प्राप्तलक्ष्मीकं विशांपतिं राजानं दिलीपं संवेशाय शयनाय विससर्ज आ-

ज्ञापयामास। पथिकस्य रात्रिजागरणात्पथि क्लेशसम्भवाद्दिलीपं शयनार्थमाज्ञप्तवान् वसिष्ठ इत्यर्थः।

(विग्रहसमासौ) दोषं जानातीति दोषज्ञः। सूनृता वाक् यस्य स सूनृतवाक्॥ ९३॥

*सत्यामिति* कल्पवित् व्रतप्रयोगज्ञो मुनि र्वसिष्ठः तपःसिद्धौ सत्यामपि नियमापेक्षया व्रतचर्यापेक्षया अस्य दिलीपस्य वन्यामेव वनोद्भवामेव संविधां कुशादिशयनसामग्रीं कल्पयामास सम्पादयामास। तपःसिद्धोऽपि मुनिः व्रतचर्यादेः काठिन्यात्तदपेक्षया सरलां वन्यसंविधामेवादिशयामासेत्यर्थः।

(समासः) नियमस्याऽपेक्षा नियमापेक्षा तया। वने भवा वन्या ताम्। कल्पं वेत्तीति कल्पवित्॥ ९४॥

*निर्दिष्टामिति* स राजा कुलपतिना मुनिकुलस्वामिना वसिष्ठेन निर्दिष्टां कथितां पर्णशालां पर्णकुटीम् अध्यास्य आधिष्ठाय प्रयतपरिग्रहद्वितीयः नियतस्त्रीसहितः कुशशयने कुशास्तरणे संविष्टः तच्छिष्याध्ययननिवेदितावसानां वसिष्ठान्तेवासिवेदपाठसूचितरात्रिसमाप्तिं निशां रात्रिं निनाय यापयामास। शयनाय वसिष्ठाज्ञप्तो दिलीपो रात्रिमत्यवाहयदित्यर्थः।

(समासः) प्रयतः परिग्रहो द्वितीयो यस्य सः। तस्य शिष्यास्तच्छिष्यास्तेषामध्ययनं तच्छिष्याध्ययनं तेन निवेदितमवसानं यस्याः सा ताम्॥ ९५॥

इति प्रथमः सर्गः।

# द्वितीय सर्गः ।

*अथेति* अथ निशातिवाहनानन्तरं यशोधनः कीर्त्तिविभवः प्रजानां जनानामधिपः स्वामी ( दिलीपः ) प्रभाते प्रातःकाले जायाप्रतिग्राहितगन्धमाल्यां सुदक्षिणास्वीकारितगन्धमालां पीतप्रतिबद्धवत्साम् भुक्तानुसंयतवत्सतराम् ऋषेर्वसिष्ठस्य धेनुं गां वनाय वनं गन्तुं मुमोच मुक्तवान् । अनन्तरं प्रभाते दिलीपः सुदक्षिणार्चितां वसिष्ठधेनुं वनं गन्तुं मुक्तवानित्यर्थः ।

( समासः ) जायया प्रतिग्राहिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या ताम् । पूर्वं पीतः पश्चात्प्रतिबद्धो वत्सो यस्याः सा पीतप्रतिबद्धवत्सा ताम् । यशांस्येव धनानि यस्य सः ॥ १ ॥

*तस्या इति* अपांसुलानां पतिव्रतानां धुर्यग्रे कीर्त्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी राज्ञी ( सुदक्षिणा ) खुरन्यासपवित्रपांसुं चरणस्थापनविशुद्धधूलिं तस्या धेनोः ( नन्दिन्याः ) मार्गं पन्थानं श्रुतेर्वेदस्याऽर्थं तात्पर्यं स्मृतिर्मन्वादिपद्धतिरिव अन्वगच्छत् अनुसृतवती । पतिव्रताग्रगण्या सुदक्षिणा वेदतात्पर्यमनुसृतवती मन्वादिपद्धतिरिव धेनुमार्गमनुसृतवतीत्यर्थः ।

(समासः) पांसवो दोषा आसां सन्तीति पांसुला न पांसुला अपांसुलास्तासां तथोक्तानाम् । मनुष्यानामीश्वरो मनुष्येश्वरः, धर्माय पत्नी धर्मपत्नी मनुष्येश्वरस्य धर्मपत्नी मनुष्येश्वरधर्मपत्नी । खुरन्यासैः पवित्राः पांसवो यस्य स खुरन्यासपवित्रपांसुस्तम् ॥ २ ॥

*निवर्त्येति* दयालुः सकृपो यशोभिः कीर्त्तिभिः सुरभिर्मनोज्ञः राजा ( दिलीपः ) तां दयिता ( सुदक्षिणां ) निवर्त्य गृहाभिमुखीं विधाय सौरभेयीं कामधेनुसुतां पयोधरीभूतचतुःसमुद्रां स्तनीभूतोदधिचतुष्टयां ( धेनुपक्षे ) दुग्धाधरीभूतोदधिचतुष्काम् । गोरूपधरां धृतगोरूपाम् उर्वीं पृथ्वीमिव जुगोप ररक्ष । दयावान् यशस्वी दिलीपः पृथ्वीमिव वसिष्ठधेनुं ररक्षेत्यर्थः ।

( समासः ) दयाऽस्त्यस्येति दयालुः । सुरभेरियं सौरभेयी ताम् । धरन्तीति धराः पयसां धराः पयोधराः न पयोधरा अपयोधरा अपयोधरा पयोधराः सम्पद्यमानाः पयोधरीभूताः पयोधरीभूताश्चत्वारः समुद्रा यस्याः सा पयोधरीभूतचतुःसमुद्रा ताम् । गोरूपस्य धरा गोरूप-

धरा ताम्। धेनुपक्षे पयसा दुग्धेनाऽधरीभूतास्तिरस्कृताश्चत्वारः समुद्रा यस्याः सा ताम् ॥ ३ ॥

*व्रतायेति* व्रताय व्रतं कर्तुं धेनोरनुचरेण सेवकेन तेन दिलीपेन शेषोऽपि अवशिष्टोऽपि अनुयायिवर्गः सेवकगणः न्यषेधि निवर्तितः। न च तस्य दिलीपस्य अन्यतोऽन्यस्मात् शरीररक्षा, हि यतः मनोः प्रसूतिः मनुसन्ततिः स्ववीर्यगुप्ता स्वसामर्थ्येनैव रक्षिता। स्वसामर्थ्येनैव रक्षितुर्मनुसन्ततेः शरीररक्षणे पुरुषान्तरानपेक्षणात्सेवकवर्गनिवर्तनमित्यर्थः।

( समासः ) अनुपश्चाद्यातुं शीलमेषां तेऽनुयायिनस्तेषां वर्गोऽनुयायिवर्गः। शरीरस्य रक्षा शरीररक्षा ( स्ववीर्येण गुप्ता स्ववीर्यगुप्ता ॥४॥

*आस्वादेति* सम्राट् मण्डलेश्वरः स राजा ( दिलीपः ) आस्वादवद्भिः स्वादयुक्तैः तृणानां शष्पानां कवलैर्ग्रासैः कण्डूयनैः खर्जनैः दंशनिवारणैः वनमक्षिकानिवर्तनैः अव्याहतैः अप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैः तस्या धेनोः समाराधनतत्परः शुश्रूषासक्तोऽभूत्। दिलीपः स्वादिष्टतृणग्रासादिभिर्धेनुसेवां चकारेत्यर्थः।

( समासविग्रहौ ) आस्वादोऽस्त्येषामास्वादवन्तस्तैः । दंशानां निवारणानि दंशनिवारणानि तैः। समाराधने तत्परः समाराधनतत्परः ५

*स्थित इति* भूपति र्दिलीपस्तां गां स्थितां निवृत्तगतिं स्थितः निवृत्तगतिः सन् प्रयातां प्रस्थितां ताम् उच्चलितः प्रस्थितः सन् निषेदुषीमुपविष्टां ताम् आसनबन्धधीरः उपविष्टः सन् जलमाददानां जलं पिबन्तीं तां जलाभिलाषी जलं पिबन् सन् इत्थं छायेव अन्वगच्छत् अनुसृतवान्। दिलीपो वसिष्ठधेनुं स्थितादिभिः सेवितवानित्यर्थः।

( समासविग्रहौ ) आसनबन्धे धीरः आसनबन्धधीरः । जलमभिलषितुं शीलमस्य जलाभिलाषी ॥ ६ ॥

* स इति* न्यस्तचिन्हां परिहृतच्छत्रचामरादिमपि तेजोविशेषाऽनुमितां प्रभावातिशयप्रतीतां राजलक्ष्मीं नृपश्रियं दधानः दधत् स राजा ( दिलीपः ) अनाविष्कृतदानराजिः अप्रकटमदपङ्क्तिः अन्तर्मदावस्थः तिरोहितमदावस्थो द्विपेन्द्रः करिराज इव आसीत् अभूत्। परिहृतराजचिन्होऽपि राजश्रीधारणाद्राजेति लोकैर्ज्ञायमानो दिलीपो बहिरप्रकटमदपङ्क्तिः करिराज इवाऽशोभतेत्यर्थः।

( समासः ) न्यस्तानि चिन्हानि यस्याः सा न्यस्तचिन्हा ताम् । राज्ञो लक्ष्मी राजलक्ष्मी ताम्। तेजसां विशेषस्तेजोविशेषस्तेनाऽनुमिता

तेजोविशेषाऽनुमिता ताम् । अनाविष्कृता दानराजिर्यस्य सोऽनाविष्कृतदानराजिः । अन्तर्मदावस्था यस्य सोऽन्तर्मदावस्थः । द्विपानामिन्द्रो द्विपेन्द्रः ॥ ७ ॥

*लतेति* लताप्रतानोद्ग्रथितैः कुटिलतन्तुकृतग्रन्थनैः केशैः शिरोरुहैः ( उपलक्षितः ) अधिज्यधन्वा आरोपितमौर्वीकः स राजा ( दिलीपः ) मुनिहोमधेनोः वसिष्ठगोः रक्षापदेशात् रक्षणव्याजात् वन्यान् आरण्यान् दुष्टसत्वान् दुष्टप्राणिनो विनेष्यन् शिक्षयिष्यन् इव दावं वनं विचचार विचरितवान् । काकपक्षधरो दिलीपो वसिष्ठगोरक्षणव्याजेन वन्यदुष्टप्राणिनां शिक्षां करिष्यन्निव वने चचारेत्यर्थः ।

( समासः ) लतानां प्रताना लताप्रातानास्तैरुद्ग्रथिता लताप्रतानोद्ग्रथितास्तैः । अधिज्यं धनुर्यस्य सः अधिज्यधन्वा । रक्षाया अपदेशो रक्षापदेशस्तस्मात् । होमाय धेनुर्होमधेनुः मुने होंमधेनु मुनिहोमधेनुः । वने भवा वन्यास्तान् । दुष्टाश्च ते सत्वा दुष्टसत्वास्तान् ॥ ८ ॥

*विसृष्टेति* विसृष्टपार्श्वानुचरस्य त्यक्तनैकटिकाऽनुयायिनः पाशभृता वरुणेन समस्य तुल्यस्य तस्य दिलीपस्य पार्श्वद्रुमाः पार्श्ववर्त्तिवृक्षाः उन्मदानाम् उत्कटमदयुक्तानां वयसां पक्षिणां विरावैः शब्दैः आलोकशब्दं जयशब्दं उदीरयामासुः कथयामासुरिव । त्यक्तानुचरस्य वरुणतुल्यस्य दिलीपस्य निकटस्थतरवः पक्षिशब्दद्वारा जयशब्दं कथयामासुरिवेत्यर्थः ।

( समासः ) विसृष्टाः पार्श्वानुचरा येन सः । पार्श्वे द्रुमाः । पार्श्वेद्रुमाः । पाशं बिभर्तीति पाशभृत् तेन । उत् उत्कटो मदो येषान्ते उन्मदास्तेषाम् । आलोकस्य जयस्य शब्दः वाचकः आलोकशब्दस्तम् ॥९॥

*मरुदिति* मरुत्प्रयुक्ता वायुप्रेरिता वाललताः ह्रस्वलतिका आरात् समीपे अभिवर्तमानं विद्यमानं मरुत्सखाभं वह्निसदृशम् अर्च्यं पूज्यं तं दिलीपं प्रसूनैः पुष्पैः पौरकन्याः पुरवासितनुजाः आचारलाजैः आचारार्थैं लाजैरिव अवाकिरन् तदुपरि निक्षिप्तवत्यः ।

( समासः ) मरुता प्रयुक्ताः मरुत्प्रयुक्ताः । वालाश्च ता लता वाललताः । मरुतः सखा मरुत्सखः स इवाभातीति मरुत्सखाभस्तम् । अर्चितुं योग्यमर्च्यम् । अभिवर्तते इत्यभिवर्तमानस्तम् । आचारार्था लाजा आचारलाजास्तैः । पुरे भवाः पौरास्तेषाङ्कन्याः पौरकन्याः (किंवा) पौराश्च ताः कन्याः पौरकन्याः ॥ १० ॥

*धनुर्भृत इति* धनुर्भृतो गृहीतचापस्यापि अस्य राज्ञः ( दिलीपस्य ) विशङ्कैः निर्भीकैः अन्तःकरणैः चित्ते दयार्द्रभावं कृपालुत्वं आ-

ख्यातम् कथितम् । ( तथाभूतं ) वपुः शरीरं ( दिलीपस्येति शेषः ) विलोकयन्त्यः पश्यन्त्यो हरिण्यः मृग्यः अक्ष्णां नेत्राणां प्रकामविस्तारफलम् अधिकविशालताप्रयोजनम् आपुः प्रापुः । दयाविशिष्टदिलीपवपुः पश्यन्त्यो हरिण्यो नेत्रविशालताफलम्प्रापुरित्यर्थः ।

( समासः ) धनुर्विभर्त्तीति धनुर्भृत् तस्य । दयया आर्द्रो भावो यस्य स दयार्द्रभावस्तम् । विगता शङ्का येषां तानि विशङ्कानि तैः । प्रकामं विस्तारः प्रकामविस्तारस्तस्य फलं प्रकामविस्तारफलम् ॥ ११ ॥

*स इति* स दिलीपः मारुतपूर्णरन्ध्रैः वायुयुक्तच्छिद्रैः अत एव कूजद्भिः शब्दायमानैः कीचकैः वेणुविशेषैः आपादितवंशकृत्यम् सम्पादितान्वयकार्यं कुञ्जेषु लताभवनेषु वनदेवताभिः उच्चैरधिकं उद्गीयमानं कीर्त्यमानं स्वं स्वकीयं यशः कीर्त्तिं शुश्राव आकर्णितवान् । दिलीपो लताभवनेषु वनदेवतागीयमानं स्वकीयं यशः शुश्रावेत्यर्थः ।

( समासः ) मारुतेन पूर्णो रन्ध्रो येषां ते मारुतपूर्णरन्ध्रास्तैः । वंशस्य कृत्यं वंशकृत्यम् आपादितं वंशकृत्यं यस्मिन्कर्मणि तत्तथा । ( क्रियाविशेषणमिदम् ) उद्गीयते इत्युद्गीयमानम् । वनस्य देवताः वनदेवतास्ताभिः ॥ १२ ॥

*पृक्त इति* गिरिनिर्झराणां पर्वतवारिप्रवाहाणाम् तुषारैः सीकरैः पृक्तः सिक्तः अनोकहाकम्पितपुष्पगन्धी वृक्षषद्विधूनितकुसुमगन्धवान् इत्थं शीतो मन्दः सुरभिः पवनो वायुः अनातपत्रं छत्ररहितं अत एव आतपक्लान्तं घर्मपीडितम् आचारपूतम् आचारशुद्धं तं ( दिलीपं ) सिषेवे शिश्रिये । वने वशिष्ठधेनुं चारयन्तं दिलीपं शीतो मन्दः सुगन्धवान् वायुः सेवितवानित्यर्थः ।

( समासः ) गिरेः निर्झरा गिरिनिर्झरास्तेषाम् । आकम्पितानि च तानि पुष्पाणि आकम्पितपुष्पाणि अनोकहानामाकम्पितपुष्पाणि अनोकहाकम्पितपुष्पाणि तेषां गन्धोऽस्त्यस्येति अनोकहाकम्पितपुष्पगन्धी । न आतपत्रं यस्यासावनातपत्रस्तम् आतपेन क्लान्त आतपक्लान्तस्तम् । आचारेण पूत आचारपूतस्तम् ॥ १३ ॥

*शशामेति* गोप्तरि रक्षके तस्मिन् राज्ञि ( दिलीपे ) वनं काननं गाहमाने प्रविशति सति वृष्ट्या विनाऽपि वर्षणमन्तराऽपि दवाग्निः वनानलः शशाम शान्तो ( निस्तेजस्को ) बभूव । फलपुष्पवृद्धिः फलकुसुमचयः विशेष आसीत् अधिको बभूव सत्वेषु प्राणिषु अधिकः प्रबलः ऊनं हीनबलं न बबाधे न हिंसितस्म । वसिष्ठधेनुचारणाय वनं प्रविष्टे दिलीपे वनाग्निः शान्तो बभूव व्याघ्रादिश्च हरिणादिकं न बाधितवानित्यर्थः ।

( समासः ) द्रवस्याऽग्निर्दवाग्निः । फलं च पुष्पं च फलपुष्पे तयोर्वृद्धिः फलपुष्पवृद्धिः ॥ १४ ॥

*सञ्चारेति* पल्लवरागताम्रा किसलयवर्णताम्रा पतङ्गस्य सूर्यस्य प्रभा कान्तिः मुनेर्वसिष्ठस्य धेनुर्गौश्च दिगन्तराणि दिगवकाशान् सञ्चारपूतानि गमनशुद्धानि कृत्वा विधाय दिनान्ते सायङ्काले निलयाय ( प्रभापक्षे ) अस्तमयाय (धेनुपक्षे) गृहाय गन्तुं प्राप्तुं प्रचक्रमे प्रारेभे । सूर्यप्रभा-वसिष्ठधेनुश्च गत्या दिगन्तरालभागान् पवित्रान् विधाय सायंकालेऽस्तमयाय गृहाय च गमनं चक्रे इत्यर्थः ।

( समासः ) सञ्चारेण पूतानि सञ्चारपूतानि । दिशामन्तराणि दिगन्तराणि । दिनस्यान्तो दिनान्तस्तस्मिन् । पल्लवस्य रागः पल्लवरागः स इव ताम्रा पल्लवरागताम्रा ॥ १५ ॥

*तामिति* मध्यमलोकपालः राजा ( दिलीपः ) देवतापित्रतिथिक्रियार्थां यागश्राद्धदानप्रयोजनां तां धेनुम् अन्वगययौ अनुपदं जगाम । सतां मतेन सद्भिर्मान्येन तेन दिलीपेन उपपन्ना युक्ता सा वसिष्ठधेनुः सतां मतेन सद्भिर्मान्येन विधिनाऽनुष्ठानेन उपपन्ना युक्ता साक्षात् श्रद्धा आस्तिक्यबुद्धिरिव बभौ शुशुभे । यथाऽनुष्ठानयुक्ता आस्तिक्यबुद्धिः शोभते तथा दिलीपयुक्ता वसिष्ठधेनुः शोभतेस्मेत्यर्थः ।

( समासः ) देवताश्च पितरश्च अतिथिश्च देवतापित्रतिथयस्तेषां क्रिया देवतापित्रतिथिक्रिया सा अर्थः प्रयोजनं यस्याः सा देवतापित्रतिथिक्रियार्थां ताम् । मध्यमश्चासौ लोको मध्यमलोकस्तस्य पालो मध्यमलोकपालः ॥ १६ ॥

*स इति* स राजा ( दिलीपः ) पल्वलोत्तीर्णवराहयूथानि अल्पजलाशयनिर्गतसूकरसमूहानि आवासवृक्षोन्मुखबर्हिणानि गृहीभूततरुसम्मुखमयूराणि श्यामायमानानि कृष्णवर्णानि मृगाध्यासितशाद्वलानि हरिणाद्यधिष्ठितशष्पाणि वनानि काननानि पश्यन् अवलोकयन् ययौ गतवान् । दिलीप आनन्दजनकमरण्यं पश्यन् जगामेत्यर्थः ।

( समासः ) पल्वलेभ्य उत्तीर्णा वराहयूथा येषु तानि । आवासवृक्षाणामुन्मुखा बर्हिणा येषु तानि । मृगैरध्यासिताः शाद्वला येषु तानि । अश्यामानि श्यामानि भवन्तीति श्यामायमानानि ॥ १७ ॥

*आपीनेति* गृष्टिः सकृत्प्रसूता धेनुः आपीनभारोद्वहनप्रयत्नात् । वृहदूधोभारवहनप्रयासात् नरेन्द्रो दिलीपश्च वपुषः शरीरस्य गुरुत्वात् स्थूलत्वात् उभौ अञ्चिताभ्यां प्रशस्ताभ्यां गताभ्यां गमनाभ्यां तपोवना-

वृत्तिपथं तपोवनावृत्तिमार्गम् अलञ्चक्रतुः भूषयामासतुः । वसिष्ठधेनु-र्दिलीपश्च तपोवनादावृत्तिमार्गे शोभितं चक्रतुरित्यर्थः ।

( समासः ) आपीनस्य भार आपीनभारस्तस्योद्वहनं आपीनभारोद्वहनं तस्मिन् प्रयत्नं तस्मात् । तपसां वनं तपोवनं आवृत्तेः पन्था आवृत्तिपथः तपोवनस्यावृत्तिपथस्तपोवनावृत्तिपथस्तम् । गुरोर्भावो गुरुत्वं तस्मात् ॥ १८ ॥

*वसिष्ठेति* वसिष्ठधेनो र्मुनिगोः अनुयायिनमनुचरं वनान्ताद्वनमध्यात् आवर्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमेषालसपक्ष्मपङ्क्तिः निमेषमन्दपक्ष्मश्रेणिः सती उपोषिताभ्यां कृतोपवासाभ्यामिव लोचनाभ्यां नेत्राभ्यां पपौ पीत ( दृष्ट ) वती । ऋषिगोरनुचरं वनादागतं दिलीपं सुदक्षिणा निर्निमेषा सती दृष्टवतीत्यर्थः ।

( समासः ) निमेषेषु अलसा पक्ष्मपङ्क्तिर्यस्याः सा ॥ १९ ॥

*पुरस्कृतेति* वर्त्मनि मार्गे पार्थिवेन राज्ञा ( दिलीपेन ) पुरस्कृता अग्रतः कृता पार्थिवधर्मपत्न्या सुदक्षिणया प्रत्युद्गता पृष्ठतः कृता वशिष्ठधेनुः तदन्तरे सुदक्षिणा-दिलीपमध्ये दिनक्षपामध्यगता वासर-निशान्तरालप्राप्ता सन्ध्या इव रराज शुशुभे । यथा दिनरात्रिमध्यवर्तिनी सन्ध्या शोभते तथा दम्पतीमध्यगता वसिष्ठधेनुः शोभतेस्मेत्यर्थः ।

( समासः ) धर्माय पत्नी धर्मपत्नी पार्थिवस्य धर्मपत्नी पार्थिवधर्मपत्नी तया । दिनश्च क्षपा च दिनक्षपे तयोर्मध्यगता दिक्षपामध्यगता ॥ २० ॥

*प्रदक्षिणीकृत्येति* साक्षतपात्रहस्ता अक्षतविशिष्टपात्रसहिता सुदक्षिणा दिलीपपत्नी पयस्विनीं प्रशस्तदुग्धवतीं तां वसिष्ठधेनुं प्रदक्षिणीकृत्य च पुनः प्रणम्य नमस्कृत्य अस्या धेनोः विशालं महत् शृङ्गान्तरं विषाणद्वयमध्यप्रदेशं अर्थसिद्धेः कार्यनिष्पत्तेः द्वारं प्रवेशमार्गमिव आनर्च पूजयामास । गृहीतसाक्षतपात्रा सुदक्षिणा धेनुं प्रदक्षिणोत्तरं प्रणम्य तच्छृङ्गमध्यभागं पूजयामासेत्यर्थः ।

( समासः ) अक्षतानां पात्रमक्षतपात्रं तेन सह वर्तेते इति साक्षततपात्रौ तथाविधौ हस्तौ यस्याः सा ॥ २१ ॥

*वत्सोत्सुकापीति* सा धेनुः वत्सोत्सुकापि पुत्रोत्कण्ठिताऽपि स्तिमिता निश्चला सती सपर्यां पूजां प्रत्यग्रहीत् स्वीचकार । इति हेतो स्तौ सुदक्षिणादिलीपौ ननन्दतु र्हृष्टौ बभूवतुः । हि यतः भक्त्या पूज्यानुरागेण उपपन्नेषु युक्तेषु । तद्विधानां गोप्रकाराणां ( महताम् )

प्रसादचिन्हानि प्रसन्नतालिङ्गानि पुरःफलानि प्रत्यासन्नप्रयोजनानि। धेनो र्वत्से उत्कण्ठावत्त्वेऽपि स्थिरतया दम्पतीकर्तृकपूजाग्रहणादद्भुत- फलसूचकलिङ्गदर्शनात्तावानन्दं प्रापतुरित्यर्थः।

( समासः ) वत्से उत्सुका वत्सोत्सुका। तस्या विधेव विधा येषां ते तद्विधास्तेषाम्। प्रसादस्य चिन्हानि प्रसादचिन्हानि पुरोगतानि फलानि येषां तानि ॥ २२ ॥

*गुरोरिति* भुजोच्छिन्नरिपुः बाहूत्पाटितशत्रुः दिलीपः सदारस्य सस्त्रीकस्य गुरोः वसिष्ठस्य पादौ चरणौ निपीड्य च पुनः सान्ध्यं सा- यंकालीनं विधिमनुष्ठानं च समाप्य निर्वर्त्य दोहावसाने दोहनान्ते निष- ण्णामासीनां दोग्ध्रीं दोहनशीलां धेनुमेव पुनर्भेजे शिश्रिये। दिली- पोऽरुन्धतीवसिष्ठयोः पादसेवनोत्तरं सायंकृत्यं समाप्य दुग्धायां धेनौ पुनस्तामेव सेवितवानित्यर्थः।

( समासः ) दारैः सहितः सदारस्तस्य। सन्ध्यायां भवं सान्ध्यम्। दोहस्यावसानं दोहवसानं तस्मिन्। भुजाभ्यामुच्छिन्ना रिपवो येन यस्य वा सः ॥ २३ ॥

*तामिति* गोप्ता रक्षकः गृहिणी सहायः स्त्रीद्वितीयः सन् अन्ति- कन्यस्तबलिप्रदीपां समीपस्थापितभागधेय-दीपां तां धेनुम् अ- न्वास्य अनूपविश्य क्रमेण सुप्ताम् अनु अनन्तरं संविवेश सुष्वाप प्रा- तरुषसि सुप्तोत्थितां त्यक्तनिद्राम् अनु पश्चात् उदतिष्ठत् उत्थित- वान्। सस्त्रीको दिलीपो वसिष्ठधेनुं बलिप्रदीपादिभिः सेवितवा- नित्यर्थः।

( समासः अन्तिके न्यस्ता बलयः प्रदीपाश्च यस्याः साऽन्तिकन्य- स्तबलिप्रदीपा ताम् गृहिणी सहायो यस्य सः ॥ २४ ॥

*इत्थमिति* इत्थमुक्तप्रकारेण प्रजार्थं सन्तानाय महिष्या कृताभि- षेकया स्त्रिया समं सह व्रतं नियमं धारयतः कुर्वतः महनीयकीर्तेः पू- ज्ययशसः दीनोद्धरणोचितस्य दुःखिजनदैन्यविमोचनपरिचितस्य तस्य दिलीपस्य त्रिगुणानि सप्त दिनानि एकविंशतिदिनानि व्यतीयुः ययुः। उक्तरीत्या सन्ततये व्रतिनो दिलीपस्यैकविंशतिदिनानि व्यतीता- नीत्यर्थः।

( समासः ) महनीया कीर्त्ति र्यस्य स महनीयकीर्त्तिस्तस्य। त्रयो गुणा येषां तानि। दीनानामुद्धरणं दीनोद्धरणं तत्रोचितस्तस्य ॥२५॥

*अन्येद्युरिति* अन्येद्युरन्यादिवसे ( द्वाविंशतिदिवसे ) मुनिहोम- धेनुः वसिष्ठहवनगौः आत्मानुचरस्य निजसेवकस्य भावमभिप्रायं ( इ-

ढभक्तित्वं ) जिज्ञासमाना ज्ञातुमिच्छन्ती गङ्गाप्रपातान्तविरूढशष्पं सुरनदीपतनप्रदेशनिकटोत्पन्नबालतृणं गौरीगुरो हिमालयस्य गह्वरं कन्दराम् आविवेश प्रविष्टवती । वसिष्ठधेनुर्दिलीपस्य भक्तिदार्ढ्यज्ञानेच्छया हिमालयकन्दरां प्रविष्टवतीत्यर्थः ।

( समासः ) आत्मनोऽनुचर आत्मानुचरस्तस्य । जिज्ञासते इति जिज्ञासमाना । होमाय धेनु र्होमधेनु र्मुने र्होमधेनु र्मुनिहोमधेनुः । गङ्गायाः प्रपातो गङ्गाप्रपातस्तस्यान्तं गङ्गाप्रपातान्तं तत्र विरूढाणि शष्पाणि यस्मिन् सगङ्गाप्रपातान्तविरूढशष्पस्तम् ।। गौर्या गुरु गौरीगुरुस्तस्य ॥ २६ ॥

*सेति* सा धेनुः हिंस्रै र्व्याघ्रादिभिः मनसा चित्तेनाऽपि दुष्प्रधर्षा दुर्धर्षा इति हेतोः अद्रिशोभाप्रहितेक्षणेन गिरिकान्तिदत्तदृष्टिना नृपेण ( दिलीपेन ) अलक्षिताभ्युत्पतनः अदृष्टाभिमुखागमनः सिंहः तां धेनुं प्रसह्य हठात् चकर्ष विलिलेख किलेत्यलीके । धेनुमायाजातसिंहस्तामकार्षीदित्यर्थः ।

( समासः ) अद्रेः शोभा अद्रिशोभा तस्यां प्रहिते ईक्षणे यस्य येन वा सोऽद्रिशोभाप्रहितेक्षणस्तेन अलक्षितमभ्युत्पतनं यस्य सः ॥ २७ ॥

*तदीयमिति* गुहानिबद्धप्रतिशब्ददीर्घं कन्दराप्रतिबद्धप्रतिध्वनिबहुलम् तदीयं धैनवीयम् आक्रन्दितं रुदितं ( कर्तृ ) आर्तसाधोः आपन्नहितकारिणः नृपस्य राज्ञः ( दिलीपस्य ) नगेन्द्रसक्तां पर्वतलग्नां दृष्टिं नेत्रं रश्मिषु प्रग्रहेषु आदाय इव गृहीत इव निवर्तयामास आचकर्ष । मायासिंहाक्रमणात्पीडिता धेनुरार्त्तनादेन गिरिशोभां पश्यन्तं दिलीपं व्याकुलयामासेत्यर्थः ।

( समासः ) गुहायां निबद्धो गुहानिबद्धः स चासौ प्रतिशब्दश्च गुहानिबद्धप्रतिशब्दस्तेन दीर्घं गुहानिबद्धप्रतिशब्ददीर्घम् । तस्या इदं तदीयम् आर्ते साधुः आर्तसाधुस्तस्य । नगेन्द्रे सक्ता नगेन्द्रसक्ता ताम् ॥ २८ ॥

*स इति* धनुर्धरः चापभृत् स नृपः पाटलायां रक्तवर्णायां गविधेनौ तस्थिवांसम् उपविष्टं केसरिणं सिंहं सानुमतः पर्वतस्य धातुमय्यां गैरिकवत्याम् अधित्यकायाम् ऊर्द्ध्वभूमौ प्रफुल्लं विकसितं लोध्रद्रुमं लोध्राख्यवृक्षमिव ददर्श दृष्टवान् । सगैरिके गिरिशिखरे पुष्पितं लोध्रवृक्षमिव रक्तवर्णाया गोरुपरि स्थितं सिंहं दृष्टवानित्यर्थः ।

( विग्रहः ) धातोर्विकारो धातुमयी तस्याम् । सानुरस्यास्तीति सानुमान् तस्य ॥ २९ ॥

*तत इति* ततः सिंहावलोकनोत्तरं मृगेन्द्रगामी सिंहगामी शरण्यो रक्षकः प्रसभोद्धृतारिः बलोत्पाटितशत्रुः नृपति र्दिलीपः जाताभिषङ्गः प्राप्तपराभवः सन् बध्यस्य वधार्हस्य सिंहस्य वधाय व्यापादनाय निषङ्गात्तूणीरात् शरं वाणं उद्धर्तुं निष्कासयितुम् ऐच्छत् चकांक्ष। दिलीपः सिंहं हन्तुं तूणीराच्छरं निष्कासयितुमियेषत्यर्थः ।

(समासः) मृगाणामिन्द्रो मृगेन्द्रस्तस्य । मृगेन्द्रं गन्तुं शीलमस्येति मृगेन्द्रगामी । हन्तुं योग्यो वध्यस्तस्य । शरणे साधुः शरण्यः । जातोऽभिसङ्गो यस्य सः । प्रसभेन उद्धृता अरयो येन सः ॥ ३० ॥

*वामेतर इति* प्रहर्तुः प्रहारं कर्तुः तस्य दिलीपस्य वामेतरः दक्षिणः करः नखप्रभाभूषितकङ्कपत्रे अङ्गुल्यग्रकान्तिशोभितकङ्कपक्षिविशेषपत्रे सायकपुङ्ख एव वाणकर्तर्याख्यमूलप्रदेश एव सक्ताङ्गुलिः समासक्तकराग्रः सन् चित्रार्पितारम्भश्चित्रलिखितवाणोद्धरणोद्योग इव अवतस्थे स्थितवान् । यथा चित्रलिखितशरोद्धरणोद्योगो निश्चलस्तथा दिलीपस्य दक्षिणहस्तो वाणमूलप्रदेशे निश्चलो ( स्तब्धो ) वभूवेत्यर्थः ।

( समासः ) वामादितरो बामेतरः । नखानां प्रभा नखप्रभास्ताभिः भूषितानि कङ्कस्य पत्राणि यस्य स नखप्रभाभूषितकङ्कपत्रस्तस्मिन् । सक्ता अङ्गुलयो यस्य सः । सायकस्य पुङ्खः सायकपुङ्खः । चित्रेऽर्पितश्चित्रार्पितस्तस्याऽऽरम्भश्चित्रार्पितारम्भः ॥ ३१ ॥

*वाहुप्रतिष्टम्भेति* वाहुप्रतिष्टम्भविवृद्धमन्युः भुजप्रतिबन्धप्रवृद्धरोषः राजा दिलीपः मन्त्रौषधिरुद्धवीर्यः मंत्रभेषजप्रतिवद्धशक्तिः भोगी सर्प इव अभ्यर्णम् समीपे ( विद्यमानमिति शेषः ) आगस्कृतम् अपराधिनम् अस्पृशाद्भिः अदंशद्भिः ( स्पर्शमकुर्वाद्भिर्वा ) स्वतेजोभिः अन्तरदह्यत भस्मसादक्रियत । यथा मन्त्रौषधिप्रभावात्क्षीणशक्तिर्भोगी स्वतेजोभिरन्त र्दहति तथा भुजप्रतिबन्धजातरोषो नृपोऽन्तरदह्यतेत्यर्थः ।

( समासः ) बाह्वोः प्रतिष्टम्भो बाहुप्रतिष्टम्भस्तेन विवृद्धो मन्युर्यस्य सः ॥ ३२ ॥

*तामिति* निगृहीतधेनुः पीडितगुः सिंहः आर्यगृह्यं सत्पक्ष्यं मनुवंशकेतुं मनुकुलचिन्हं सिंहोरुसत्त्वं महावलम् आत्मवृत्तौ वाहुस्तम्भरूपे व्यापारे विस्मितं साश्चर्यं तं दिलीपं मनुष्यवाचा मानवगिरा पुन र्भूयः विस्माययन् आश्चर्यं प्रापयन् निजगाद प्रत्यब्रवीत्। सिंहो वाहुस्तम्भनात्साश्चर्यमपि दिलीपं मनुष्यवचनेन पुनराश्चर्यं प्रापयन् वक्ष्यमाणवचनमुवाचेत्यर्थः ।

( समासः ) आर्याणां गृह्यमार्यगृह्यम् । निगृहीता धेनु र्येन स नि-गृहीतधेनुः । मनुष्यस्य वाक् मनुष्यवाक् तया । मनोर्वंशो मनुवंशस्तस्य केतुः मनुवंशकेतुः । आत्मनो वृत्तिरात्मवृत्तिस्तस्याम् । सिंह इवोरु सत्वं यस्य स सिंहोरुसत्वस्तम् ॥ ३३ ॥

*अलमिति* हे महीपाल ! तव भवतः श्रमेण प्रयासेन अलं व्यर्थम् । ( असाध्यत्वाच्छ्रमोऽविधेय इत्यर्थः ) । इतोऽस्मिन् मयि प्रयुक्तं प्रहितमपि अस्त्रं वाणो वृथा निरर्थकः स्यात् । ( तदेव दर्शयति ) पादपोन्मूलनशक्ति तरूत्पाटनसामर्थ्यं मारुतस्य वायोः रंहो वेगः शिलोच्चये पर्वते न मूर्च्छति न प्रसरति यथा तरूत्पाटनसमर्थोऽपि वायुवेगः पर्वते व्यर्थो भवति तथा मयि भवद्वाणो व्यर्थ इत्यर्थः ।

( समासः ) पादपानामुन्मूलनं पादपोन्मूलनं तत्र शक्तिः सामर्थ्यं यस्य तत् । उच्चयनमुच्चयः शिलानामुच्चयः शिलोच्चयस्तस्मिन् ॥३४॥

*कैलासेति* कैलासगौरं शिवगिरिशुभ्रं वृषं वृषभम् आरुरुक्षोः आरोढुमिच्छोः अष्टमूर्तेः शिवस्य पादार्पणानुग्रहपूतपृष्ठम् चरणन्यास प्रसादपवित्रीकृतपृष्ठं निकुम्भमित्रं निकुम्भसुहृदं कुम्भोदरं नाम कुम्भोदरनामधेयं किंकरं भृत्यं माम् अवेहि जानीहि । शिवचरणस्पर्शपवित्रीभूतं तत्सेवकं मां जानीहीत्यर्थः ।

( समासः ) कैलास इव गौरः कैलासगौरस्तम् । पादयोरर्पणं पादार्पणं तदेवाऽनुग्रहः प्रसादस्तेन पूतं पृष्ठं यस्य स पादार्पणाऽनुग्रहपूतपृष्ठस्तम् । निकुम्भस्य मित्र निकुम्भमित्रम् ॥ ३५ ॥

*अमुमिति* पुरोऽग्रेऽमुं देवदारुं पश्यसि वीक्षसे, असौ देवदारुः वृषभध्वजेन शिवेन पुत्रीकृतः पुत्रत्वेन स्वीकृतः । देवदारुः स्कन्दस्य कार्तिकेयस्य मातुर्जनन्याः ( पार्वत्याः ) हेमकुम्भस्तनानस्सृतानां सुवर्णघटकुचवहिर्गतानां पयसां जलानां रसज्ञः स्वादवित् ( स्कन्दपक्षे ) पयसां क्षीराणाम् । यथा स्कन्दः गौरीस्तनक्षीररसज्ञस्तथाऽयमपि देवदारुः गौरीस्तनसदृशसुवर्णकुम्भजलरसज्ञ इति भावः ।

(समासः) अपुत्रः पुत्रः सम्पन्नः पुत्रीकृतः । वृषभो ध्वजे यस्य स वृषभध्वजस्तेन । हेम्नः कुम्भौ हेमकुम्भौ तौ स्तनाविव हेमकुम्भस्तनौ ताभ्यां निःसृता हेमकुम्भस्तननिस्सृतास्तेषाम् । रसं जानातीति रसज्ञः ॥ ३६ ॥

*कण्डूयमानेनेति* कदाचित् कटं कपोलं कडूयमानेन घर्षयता वन्यद्विपेन आरण्यकरिणा अस्य देवदारोः त्वक् उन्मथिता दूरीकृता । अथाऽनन्तरं अद्रेः पर्वतस्य तनया कन्या ( पार्वती ) असुरास्त्रै र्दानववाणादिभिः आलीढं क्षतं सेनान्यं स्कन्दमिव एनं देवदारु शुशोच । यथा

असुरास्त्रविद्धस्कन्दवीक्षणाददद्रितनयायाः शोकस्तथा देवदारुस्त्वगुन्मथनादपीति भावः ।

( समासः ) वने भवो वन्यः स चासौ द्विपो वन्यद्विपस्तेन । सेनां नयतीति सेनानीस्तम् ॥ ३७ ॥

*तदेति* तदाप्रभृत्येव तदारभ्यैव वनद्विपानाम् अरण्यहस्तिनां त्रासार्थं भयार्थं शूलभृता शिवेन अङ्कागतसत्त्ववृत्ति क्रोडप्राप्तप्राणिजीवनं सिंहत्वं विधाय कृत्वा अस्मिन् अद्रिकुक्षौ गिरिगह्वरे अहं व्यापारितो नियुक्तः । गौरीगुरुणा वन्यहस्तित्रासार्थमत्राहं स्थापितोऽस्मीत्यर्थः ।

( समासः ) तदा तत्कालः प्रभृतिरादिर्यस्मिन्कर्मणि तत् । वनस्य द्विपा वनद्विपास्तेषाम् । अद्रेः कुक्षिरद्रिकुक्षिस्तस्याम् । शूलं बिभर्तीति शूलभृत् तेन । अङ्कमागता अङ्कागतास्तथाभूताः सत्त्वा वृत्तिर्यस्मिन् तत् ॥ ३८ ॥

*तस्येति* परमेश्वरेण ब्रह्मणा प्रदिष्टकाला निर्दिष्टसमया उपस्थिता प्राप्ता एषा गोरूपा शोणितपारणा रुधिरव्रतान्तभोजनम् सुरद्विषो राहोः चान्द्रमसी ऐन्दवी सुधा पीयूषमिव क्षुधितस्य बुभुक्षितस्य तस्य अङ्कागतसत्त्ववृत्तेः मे मम तृप्त्यै सन्तोषाय अलं पर्याप्तम् । बुभुक्षितस्य मम तृप्त्यर्थं परमेश्वरेणैवेयं गौः प्रेषिता अतस्त्वं प्रतिबन्धको मा भूरित्यर्थः ।

( समासः ) प्रदिष्टः कालो यस्याः सा । परमश्चासावीश्वरः परमेश्वरस्तेन । शोणितस्य पारणा शोणितपारणा । सुरान्द्वेष्टीति सुरद्विट् तस्य । चन्द्रमस इयं चान्द्रमसी ॥ ३९ ॥

*स इति* स निरुपायः त्वं लज्जां व्रीडां विहाय दूरीकृत्य निवर्तस्व गच्छ, भवान् त्वं गुरोर्वसिष्ठस्य दर्शितशिष्यभक्तिः प्रकाशितान्तेवासिकार्यः ( अस्ति ) यत् रक्ष्यं पालनीयं धनं शस्त्रेण आयुधेन अशक्यरक्षम् रक्षितुमशक्यम् तत् रक्ष्यं ( नष्टमपि ) शस्त्रभृतां शस्त्रधारिणां यशः कीर्त्तिं न क्षिणोति न दूषयति । दर्शितगुरुभक्तिस्त्वं त्यक्तलज्जः सन् गच्छ, सामर्थ्येनारक्ष्यं धनं शस्त्रधारिकीर्त्तिं न दूषयतीत्यर्थः ।

( समासः ) दर्शिता शिष्यस्य भक्ति र्येन सः । अशक्या रक्षा यस्य तत् । शस्त्रं बिभ्रतीति शस्त्रभृतस्तेषाम् ॥ ४० ॥

*इतीति* पुरुषाधिराजो लोकश्रेष्ठः ( नृपः ) इतीत्थं प्रगल्भं धृष्टं मृगाधिराजस्य सिंहस्य वचो वाणीं निशम्य श्रुत्वा गिरिशप्रभावात् शिवानुग्रहात् प्रत्याहतास्त्रः कुण्ठितायुधः सन् आत्मनि स्वस्मिन् अवज्ञाम् अनादरं शिथिलीचकार त्यक्तवान् । शिवप्रसादादेव सिंहो मत्तः प्रबलो नतु स्वशक्त्येत्यालोच्य तत्कृतापमानं जहावित्यर्थः ।

( समासः ) पुरुषाणामधिराजा पुरुषाधिराजः। मृगाणामधिराजा मृगाधिराजस्तस्य। प्रत्याहतमस्त्रं यस्य सः। गिरिशस्य प्रभावो गिरिशप्रभावस्तस्मात् ॥ ४१ ॥

*प्रत्यब्रवीदिति* तत्पूर्वभङ्गे तत्प्रथमप्रतिबन्धे इषुप्रयोगे बाणव्यापारे वितथप्रयत्नो विफलप्रयासः अत एव वज्रं कुलिशं मुमुक्षन् त्यक्तुमिच्छन् त्र्यम्बकवीक्षणेन शिवावलोकनेन जडीकृतः निष्पन्दीकृतो वज्रपाणिरिन्द्र इव स्थितो नृप एनं सिंहं प्रत्यब्रवीत् जगाद। यथा शिवदर्शनाज्जडीकृतो वज्रपाणिस्तथा सिंहदर्शनाज्जडीकृतो नृपस्तं प्रत्युवाचेत्यर्थः।

( समासः ) इषोः प्रयोग इषुप्रयोगस्तस्मिन्। स एव पूर्वो भङ्गो यस्य स तत्पूर्वभङ्गस्तस्मिन्। वितथं प्रयत्नं यस्य सः। अजडो जडः सम्पन्नः जडीकृतः। त्र्यम्बकस्य वीक्षणं त्र्यम्बकवीक्षणं तेन। वज्रं पाणौ यस्य स वज्रपाणिः ॥ ४२ ॥

* संरुद्धचेष्टस्येति * हे मृगेन्द्र! संरुद्धचेष्टस्य प्रतिबद्धोद्योगस्य (मम) तद्वचो वाक्यं कामं यथेच्छं हास्यं परिहसनीयम्। यद्वचः (सत्वं मदीयेनेति वक्ष्यमाणमिति शेषः) अहं विवक्षु र्वक्तुमिच्छुः (अस्मीति क्रियाशेषः)। हि यतो भवान् प्राणभृताम् शरीरिणां अन्तर्गतं हृदयस्थितं सर्वं निखिलं भावमभिप्रायं वेद जानाति अतोऽस्माद्धेतोः अभिधास्ये वक्ष्ये (अहमितिकर्तृपदमध्याहार्यम्) सकलप्राणिमानसिकाभिप्रायवेत्तरि त्वयि मत्कथनं युक्तमिति भावः।

( समासः ) संरुद्धा चेष्टा यस्य स संरुद्धचेष्टस्तस्य। मृगाणामिन्द्रो मृगेन्द्रस्तत्सम्बुद्धौ। हसितुं योग्यं हास्यम्। वक्तुमिच्छुर्विवक्षुः। प्राणं बिभ्रतीति प्राणभृतस्तेषाम् ॥ ४३ ॥

*मान्य इति* स्थावरजङ्गमानां तरुशैलादि—मनुष्यादीनां सर्गस्थितिप्रत्यवहारहेतुः सृष्टिपालन-प्रलयकारणं स ईश्वरः (शिवः) मे मम मान्यः पूज्यः। पुरस्तादग्रे नश्यत् इदं पुरोवर्ति आहिताग्नेः कृताग्न्याधानस्य गुरोर्वसिष्ठस्य धनं गोरूपमपि अनुपेक्षणीयम् अत्याज्यम्। यथा मान्यस्येश्वरस्य सत्कारः ( अतिरस्कारः ) तथाभूतस्य मम गुरोर्गोधनस्याऽत्यागश्च भवेत्तथा भवता कर्तव्यमिति भावः।

( समासः ) स्थावराश्च जङ्गमाश्च स्थावरजङ्गमास्तेषाम्। सर्गश्च प्रत्यवहारश्च सर्गस्थितिप्रत्यवहारास्तेषां हेतुः। आहितोऽग्निर्येन स आहिताग्निस्तस्य। उपेक्षितुं योग्यमुपेक्षणीयं नोपेक्षणीयमनुपेक्षणीयम् ॥ ४४ ॥

*स इति* सः अङ्कागतसत्त्ववृत्तिः क्रोडप्राप्तप्राणिजीवनः मदीयेन मामकीनेन देहेन कायेन शरीरवृत्तिं शरीरजीवनं निर्वर्तयितुं सम्पादयितुं प्रसीद प्रसन्नो भव। दिनावसानोत्सुकबालवत्सा वासरान्तोत्कण्ठितबालवत्सा इयं महर्षेः वसिष्ठस्य धेनु गौः विसृज्यतां त्यज्यताम्। ममोपरि प्रसन्नो भूत्वा मदीयशरीरेण व्रतान्तभोजनं सम्पाद्य गुरुधेनुं त्यजेत्यर्थः ।

( समासः ) शरीरस्य वृत्तिः शरीरवृत्तिस्तम्। दिनस्यावसानं दिनावसानं तत्रोत्सुको बालो वत्सो यस्याः सा। महांश्चासावृषि महर्षिस्तस्य ॥ ४५ ॥

*अथान्धकारमिति* अथ अनन्तरं ( दिलीपाभिधानोत्तरं ) भूतेश्वरपार्श्ववर्ती शिवानुचरः स सिंहः गिरिगह्वराणां पर्वतकन्दराणाम् अन्धकारं गाढध्वान्तं दंष्ट्रामयूखैः दशनकिरणैः शकलानि खण्डानि कुर्वन् विदधत् किञ्चित् ईषत् विहस्य हास्यं कृत्वा (हसित्वा) अर्थपतिः राजा- तं प्रति भूयः पुनर्बभाषे। दिलीपवचनमाकर्ण्य तदुत्तरं दातुमिच्छुः सिंहो जगादेत्यर्थः ।

( समासः ) गिरेर्गह्वराणि गिरिगह्वराणि तेषाम्। दंष्ट्राणां मयूखा दंष्ट्रामयूखास्तैः। भूतानामीश्वरो भूतेश्वरः पार्श्वे वर्तितुं शीलमस्य पार्श्ववर्ती भूतेश्वरस्य पार्श्ववर्ती भूतेश्वरपार्श्ववर्ती। अर्थानां पतिः अर्थपतिस्तम् ॥ ४६ ॥

*एकातपत्रमिति* एकातपत्रं एकच्छत्रं जगतो भुवनस्य प्रभुत्वम् स्वामित्वम् नवं नूतनं वयो यौवनम् इदं पुरोदृश्यमानं कान्तं रमणीयं वपुः शरीरं च इत्येवं बहु अल्पस्य हेतोः अल्पेन कारणेन हातुं त्यक्तुं इच्छन् अभिलषन् त्वं विचारमूढः कार्याकार्यविमर्शमूर्खः मे मम प्रतिभासि ज्ञायसे। अल्पकारणाद्बहुत्यागी मूर्ख एव भवतीति भावः।

(समासः) एकं च तदातपत्रं च एकातपत्रम्। विचारे मूढो विचारमूढः ॥ ४७ ॥

*भूतानुकम्पेति* तव भवतो भूतानुकम्पा जीवदया चेत् ( तर्हि ) त्वदन्ते तव विनाशे सति इयं पुरोवर्तिनी एका अद्वितीया गौः स्वस्तिमती कल्याणयुक्ता भवेत् स्यात्। हे प्रजानाथ ! जीवन् श्वसन् पुनः पितेव जनक इव प्रजाः जनान् उपप्लवेभ्य उपद्रवेभ्यः शश्वत् सर्वदा पासि रक्षसि। मृते त्वयि केवलं गोरेव जीवनं जीवति त्वयि बहुजनजीवनमतो भवदुक्तमयुक्तमिति भावः।

( समासः ) भूतेषु अनुकम्पा भूतानुकम्पा । स्वस्ति अस्त्यस्या इति स्वस्तिमती । तव अन्तस्त्वदन्तस्तस्मिन् । प्रजानां नाथः प्रजानाथस्तत्सम्बुद्धौ ॥ ४८ ॥

*अथेति* ( अथशब्दोऽत्र पक्षान्तरे ) अथ अथवा एकधेनोः एकगोः अपराधचण्डात् आगःकोपनात् ( अत एव ) कृशानुप्रतिमात् अग्निसदृशात् गुरो र्वसिष्ठात् बिभेषि भीतो भवसि । ( तर्हि ) अस्य गुरोर्मन्युः क्रोधः घटोध्नीः स्थूलस्तनीः कोटिशः कोटिसंख्यका गाः स्पर्शयता प्रत्यर्पयता भवता त्वया विनेतुमपनेतुं शक्यः । गुरोर्भीतेन भवता एकगोस्थानेऽनेकगोप्रदानात्तत्कोपपरिहारः कर्तुं शक्यत इति भावः ।

( समासः ) एका धेनुर्यस्य स एकधेनुस्तस्मात् । अपराधे चण्डो अपराधचण्डस्तस्मात् । कृशानुः प्रतिमा यस्य स कृशानुप्रतिमस्तस्मात् । घट इव ऊधो यासां ता घटोध्न्यस्ता घटोध्नीः ॥ ४९ ॥

*तद्रक्षेति* तत्तस्मात्कारणात् कल्याणपरम्पराणां मङ्गलश्रेणीनाम् भोक्तारम् भोगकारिणम् ऊर्जस्वलं बलवन्तम् आत्मदेहं निजशरीरं रक्ष हि यतः ऋद्धं समृद्धं राज्यं महीतलस्पर्शनमात्रभिन्नं भूतलसम्बन्धमात्रातिरिक्तम् ऐन्द्रम् इन्द्रसम्बन्धि पदं स्थानमाहुः कथयन्ति । समृद्धराज्यस्य स्वर्गतुल्यत्वात्तद्भोक्तुः शरीरस्य रक्षणमावश्यकमितिभावः ।

( समासः ) कल्याणानां परम्पराः कल्याणपरम्परास्तासाम् । ऊर्जोऽस्त्यस्येति ऊर्जस्वलम् । आत्मनो देह आत्मदेहस्तम् । महीतलस्य स्पर्शनं महीतलस्पर्शनं तदेव महीतलस्पर्शनमात्रं तेन भिन्नं । इन्द्रस्येदमैन्द्रम् ॥ ५० ॥

*एतावदिति* मृगेन्द्रे सिंहे एतावत् इयत् उक्त्वा अभिधाय विरते विश्रान्ते (कृतमौनावलम्बने) सति गुहागतेन कन्दराप्राप्तेन अस्य सिंहस्य प्रतिवचनेन प्रतिशब्देन शिलोच्चयः पर्वतोऽपि प्रीत्या हर्षेण तमेव उक्तमेवाऽर्थं क्षितिपालं राजानमुच्चैः अभाषत इव अब्रवीदिव । सिंहोक्तवचनं प्रतिशब्दद्वारा पर्वतोप्यनुवदतीत्यर्थः ।

( समासः ) मृगाणामिन्द्रो मृगेन्द्रस्तस्मिन् । गुहां गतो गुहागतस्तेन । शिलानामुच्चयः शिलोच्चयः । पालयतीति पालः क्षितेः पालः क्षितिपालस्तम् ॥ ५१ ॥

*निशम्येति* देवानुचरस्य शिवकिङ्करस्य (सिंहस्य) वाचं वाणीं निशम्य श्रुत्वा तदध्यासितकातराक्ष्या सिंहव्याक्रमणव्याकुलनयनया धेन्वा गवा निरीक्ष्यमाणो दृश्यमानः (अत एव) सुतरामतिशयेन दयालुः

कृपालुः मनुष्यदेवो राजा ( दिलीपः ) पुनर्भूयोऽपि उवाच । दयालु र्दिलीपः सिंहवचनोत्तरं पुनर्जगादेत्यर्थः ।

( समासः ) देवानामनुचरो देवानुचरस्तस्य । मनुष्याणां देवो मनुष्यदेवः । तेन अध्यासितं तदध्यासितं तदध्यासितेन कातरे अक्षिणी यस्याः सा तदध्यासितकातराक्षी तया । नितरामीक्ष्यमाणो निरीक्ष्यमाणः । ॥ ५२ ॥

*क्षतादितिकलेति* क्षतात्कष्टात् त्रायते रक्षतीति उदग्र उन्नतः क्षत्रस्य क्षत्रवर्णस्य शब्दो वाचकः भुवनेषु जगत्सु रुढः किल प्रसिद्धः खलु। तद्विपरीतवृत्तेः क्षत्त्रविरुद्धव्यापारस्य ( कष्टादरक्षतः ) (पुंसः) राज्येन किं, वा उपक्रोशमलीमसैः निन्दामलिनैः प्राणैः किं न किमपि प्रयोजनम्। कष्टाद्रक्षक एव क्षत्रियस्तद्भिन्नो न क्षत्रिय इत्यर्थः ।

( समासः ) तस्माद्विपरीता वृत्ति र्यस्य स तद्विपरीतवृत्तिस्तस्य । (अथवा) विपरीता वृत्ति र्यस्य स विपरीतवृत्तिः स चासौ विपरीत वृत्ति स्तद्विपरीतवृत्तिस्तस्य । उपक्रोशेन मलीमसा उपक्रोशमलीमसास्तैः ॥ ५३ ॥

*कथमिति*(चशब्दो वाशब्दार्थे) वा महर्षे र्वसिष्ठस्य अनुनयः क्रोधापनयः अन्यपयस्विनीनां धेन्वन्तराणां विश्राणनात् प्रदानात् कथं नु शक्यो नैव शक्यः। इमां गां सुरभेः कामधेनोः अनूनां तुल्याम् अवेहि जाना हि अस्यां गवि रुद्रौजसा शिवतेजसा त्वया प्रहृतं न तु स्वयं प्रहृतम्। अन्यगोदानान्न गुरुक्रोधापनयः कर्तुं शक्य इत्यर्थः ।

( समासः )महांश्चासावृषिर्महर्षिस्तस्य ।पयोऽस्त्यासां पयस्विन्यः अन्याश्च ताः पयस्विन्योऽन्यपयस्विन्यस्तासाम् । न ऊना अनूना ताम्। रुद्रस्य ओजो रुद्रौजस्तेन ॥ ५४ ॥

*सेयमिति* सा इयं गौः मया स्वदेहार्पणनिष्क्रयेण निजशरीरदानमूल्येन भवत्तस्त्वत्तो मोचयितुं त्याजयितुं न्याय्या युक्ता । एवं सति तव भवतः पारणा व्रतान्तभोजनं विहता नष्टा न स्यात् न भवेत्। मुनेर्वसिष्ठस्य क्रियार्थः होमादिरूपप्रयोजनं च अलुप्तश्च भवेत् । सेवकै र्निजप्राणव्ययेनापि स्वामिगुरुधनरक्षा विधेयेति भावः ।

( समासः ) स्वस्य देहः स्वदेहस्तस्याऽर्पणं तदेव निष्क्रयस्तेन । क्रियैव अर्थः क्रियार्थः ॥ ५५ ॥

*भवानिति* परवान् पराधीनो भवानपि इदं वक्ष्यमाणं अवैति जानाति हि यतः तव भवतो देवदारो देवदारुविषये महान् अधिकः यत्नः

प्रयासः ( अस्तीति क्रियाशेषः ) रक्ष्यं पालनीयं वस्तु विनाश्य नाशं प्रापय्य स्वयमक्षतेन अव्रणेना नियुक्तेन (पुरुषेण) नियोक्तुः स्वामिनोऽग्रे पुरः स्थातुं वर्तितुं नहि शक्यम् । सेवकस्य ( परतन्त्रस्य ) सर्वथा स्वामिधनरक्षणमेव कार्यमिति भावः ।

( समासः ) न क्षतोऽक्षतस्तेन । नियोजयतीति नियोक्ता तस्य॥५६॥

*किमिति* किमपि किम्वा तव भवतोऽहिंस्योऽवध्यो मतो ज्ञातश्चेत् तर्हि मे मम यशश्शरीरे कीर्त्तिकाये दयालुः कारुणिको भव। मद्विधानां मादृशानां ( विवेकवताम् ) एकान्तविध्वंसिषु अवश्यविनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेषु अनास्था खलु अनपेक्षैव। मादृशानां भौतिकशरीरेष्वनपेक्षणान्मच्छरीरं भक्षयित्वा गुरो र्धेनुं त्यजेत्यर्थः ।

( समासः ) हिंसितुं योग्यो हिंस्यो न हिंस्योऽहिंस्यः । यश एव शरीरं यशश्शरीरं तस्मिन्।एकान्तमवश्यं विध्वंसितुं शीलमेषां तान्येकान्तविध्वंसीनि तेषु । मम विधा येषां ते मद्विधास्तेषाम् । न आस्था अनास्था । भूतानां विकारा भौतिकास्तेषु ॥ ५७ ॥

*सम्बन्धमिति* सम्बन्धं सख्यम् आभाषणपूर्वं आलापकारणम् आहु र्वदन्ति स सम्बन्धः वनान्ते वनमध्ये सङ्गतयोः प्राप्तयो र्नौ आवयो र्वृत्तः सम्पन्नः । तत्तस्मात्कारणात् हे भूतनाथानुग हे शिवानुचर सम्बन्धिनः सुहृदो मे मम प्रणयं स्नेहं विहन्तुं अपनेतुं नार्हसि । मित्रेषु स्नेहो वर्द्धनीय एव नाऽल्पीकरणीय इति भावः ।

( समासः ) आभाषणं पूर्वं यस्य स अभाषणपूर्वस्तम् । भूतानां नाथो भूतनाथस्तत्सम्बुद्धौ ॥ ५८ ॥

*तथेतीति* तथा इति यथा भवेदिच्छा तथैव करिष्यामीत्यर्थः । गां वाणीं उक्तवते कथयते हरये सिंहाय सद्यस्तत्क्षणे प्रतिष्टम्भविमुक्तबाहुः प्रतिबन्धरहितभुजः स दिलीपः न्यस्तशस्त्रस्त्यक्तायुधः सन् स्वदेहं निजशरीरं आमिषस्य मांसस्य पिण्डमिव उपानयत् अर्पितवान्। दिलीपो गुरो र्गोरक्षणाय तत्स्थाने निजशरीरं सिंहाय समर्पितवानित्यर्थः।

( समासः ) अवोचदित्युक्तवान् तस्मै । प्रतिष्टम्भाद्विमुक्तौ बाहू यस्य सः । न्यस्तं शस्त्रं येन यस्य वा सः । स्वस्य देहः स्वदेहस्तम् ॥ ५९ ॥

*तस्मिन्निति* तस्मिन्क्षणे सिंहनिपातकाले उग्रं प्रचण्डं सिंहनिपातं सिंहोपप्लवनम् । उत्पश्यतः उत्प्रेक्षमाणस्य अवाङ्मुखस्य अधोमुखस्य प्रजानां पालयितुः राज्ञः ( दिलीपस्य ) उपरि उपरिष्टात् विद्याधरहस्तमुक्ता देवयोनिविशेषकरच्युता पुष्पवृष्टिः कुसुमवर्षणं पपात । सिंहाय कृतनिजशरीरार्पणस्य दिलीपस्योपरि पुष्पवृष्टिर्बभूवेत्यर्थः ।

( समासः ) अवाङ् मुखं यस्य सोऽवाङ्मुखस्तस्य । पुष्पस्य वृष्टिः पुष्पवृष्टिः । विद्याधराणां हस्ता विद्याधरहस्तास्तै र्मुक्ता विद्याधरहस्तमुक्ता ॥ ६० ॥

*उत्तिष्ठेति* राजा दिलीपः अमृतायमानं पीयूषसदृशम् उत्थितमुत्पन्नं हे वत्स उत्तिष्ठ इति वचो वचनं निशम्य श्रुत्वा उत्थितः सन् अग्रतः पुरतः प्रस्रविणीं क्षीरवतीं गां स्वां स्वकीयां जननीं मातरमिव ददर्श दृष्टवान् । सिंहाय शरीरसमर्पणोत्तरं गोवाण्योत्थितो दिलीपो गामेव दृष्टवान् न सिंहमित्यर्थः ।

( समासः ) अमृतमिवाचरतीति अमृतायमानम् । प्रकृष्टः स्रावः क्षीरस्रावो यस्याः सा प्रस्रविणी ताम् ॥ ६१ ॥

*तमिति* धेनु र्गौः विस्मितं साश्चर्यम् तं दिलीपं हे साधो परोपकारनिरत ! मया मायां उद्भाव्य कल्पयित्वा परीक्षितः कृतपरीक्षोऽसि । ऋषिप्रभावात् वसिष्ठमाहात्म्यात् मयि ( विषये ) अन्तको यमोऽपि प्रहर्तुं घातयितुं न प्रभु र्न समर्थः अन्यहिंस्रा अन्यघातुकाः किमुत नैव समर्था इत्यर्थः इत्युवाच उक्तवती । मया त्वं परीक्षितोऽसि नान्तकोऽपि मयि घातुको भवितुमर्हति किमन्ये इति धेनुरुवाचेत्यर्थः ।

( समासः ) ऋषेः प्रभावः ऋषिप्रभावस्तस्मात् । अन्ये च ते हिंस्रा अन्यहिंस्राः ॥ ६२ ॥

*भक्त्येति* हे पुत्र ! गुरौ वशिष्ठे भक्त्या सेवया मयि अनुकम्पया दयया च ते तुभ्यं प्रीता प्रसन्नाऽस्मि वरं वरणीयमर्थं वृणीष्व स्वीकुरु । तथाहि वरदातृत्वं दर्शयति– मां केवलानां पयसां दुग्धानां प्रसूतिं कारणं उत्पादयित्रीं न अवेहि जानाहि किन्तु प्रसन्नां हृष्टां मां कामदुघां यथेच्छफलदात्रीम् अवेहि भक्त्या दयया च प्रसन्नाऽहं सम्पादयिष्यामीति भावः ।

( समासः ) कामान्दोग्धीति कामदुघा ताम् ॥ ६३ ॥

*तत इति* ततस्तदनन्तरं मानितार्थी प्रसन्नीकृतयाचकः स्वहस्तार्जितवीरशब्दः निजकरसम्पादितवीरशब्दः स राजा ( दिलीपः ) हस्तौ करौ समानीय अञ्जलिबद्ध्वा वंशस्य कुलस्य कर्तारं रक्षकम् अनन्तकीर्तिं अगणितयशसम् तनयं पुत्रं सुदक्षिणायां ( निजधर्मपत्न्याम् ) ययाचे वृतवान् । धेनुवचनमाकर्ण्य दिलीपः पत्न्याम् आत्मसदृशं पुत्रं ततो याचितवानित्यर्थः ।

( समासः ) मानिता अर्थिनो येन सः । स्वहस्ताभ्यामर्जितो वीर इति शब्दो येन सः । अनन्ता कीर्ति र्यस्य सोऽनन्तकीर्त्तिस्तम् ॥ ६४ ॥

*सन्तानकामायेति* सा पयस्विनी सन्तानकामाय पुत्राभिलाषुकाय राज्ञे दिलीपाय तथेति कामं वरं प्रतिश्रुत्य प्रतिज्ञाय हे पुत्र ! मदीयं मामकीनं पयो दुग्धं पत्रपुटे पत्रनिर्मितपात्रे दुग्ध्वा उपभुङ्क्ष्व पिव इत्यादिदेश आज्ञापितवती । गौर्वरं प्रतिज्ञाय दुग्धपानाय दिलीपमाज्ञापयामासेत्यर्थः ।

(समासः ) सन्तानं कामयते इति सन्तानकामस्तस्मै । पयोऽस्त्यस्याः पयस्विनी । पत्रस्य पुटं पत्रपुटं तस्मै ॥ ६५ ॥

*वत्सस्येति* हे मातः ! वत्सस्य वत्सपीतस्य ( वत्सपीतावशिष्टस्य ) होमार्थविधे र्होमावशिष्टस्य च शेषमवशिष्टं तव औधस्यं दुग्धं रक्षितायाः पालिताया उर्व्याः पृथिव्याः षष्ठांशं षष्ठभागमिव ऋषे गुरो (र्वसिष्ठस्य) अनुज्ञामादेशम् अधिगम्य प्राप्य उपभोक्तुं पातुम् इच्छामि काङ्क्षे । ऋषिणाऽनुज्ञातोऽहं वत्स-होमार्थविध्योरवशिष्टं तव दुग्धं पास्यामीत्यर्थः ।

( समासः ) होम एवार्थो होमार्थस्तस्य विधिर्होमार्थविधिस्तस्य । ऊधसि भवमौधस्यम् ॥ ६६ ॥

*इत्थमिति* इत्थमुक्तप्रकारेण क्षितीशेन राज्ञा ( दिलीपेन ) विज्ञापिता प्रार्थिता वसिष्ठधेनुः ऋषिगौः प्रीततरा अतिसन्तुष्टा बभूव । तदन्विता दिलीपयुक्ता सती हैमवतात् हिमवत्सम्बन्धिनः कुक्षे र्गुहायाः सकाशात् अश्रमेण अप्रयासेन आश्रमं स्थानं प्रत्यायया प्रत्यागतवती । दिलीपप्रार्थिता गौस्तेन सहाश्रमं प्रत्याजगामेत्यर्थः ।

*तस्या इति * प्रसन्नेन्दुमुखः पूर्णचन्द्राननः नृपाणां राज्ञां गुरुः श्रेष्ठो दिलीपः प्रहर्षचिन्हानुमितं मुखरागाद्यूहितं तस्या धेनोः प्रसादमनुग्रहं पुनरुक्तया पुनः प्रतिपादितया इव वाचा वाण्या गुरवे वसिष्ठाय

निवेद्य विज्ञाप्य पश्चात् प्रियायै सुदक्षिणायै शशंस जगाद ! दिलीपो धेनुप्रसादं प्राग्गुरवे निवेद्य पश्चात्सुदक्षिणायै कथयामासेत्यर्थः ।

(समासः) प्रसन्नेन्दुरिव मुखं यस्य सः । प्रहर्षं च तच्चिन्हं च प्रहर्षचिन्हं तेनाऽनुमितं प्रहर्षचिन्हानुमितम् ॥ ६८ ॥

*स इति* अनिन्दितात्मा अगर्हितप्रकृतिः सद्वत्सलः सत्प्रेमवान् वसिष्ठन ऋषिणा कृताभ्यनुज्ञः आज्ञप्तः स ( दिलीपः ) वत्सहुतावशेषं वत्सपीतहोमावशिष्टं नन्दिनीस्तन्यं धेनुक्षीरं शुभ्रं स्वच्छं मूर्तं मूर्तिमत् यशः कीर्तिमिव अतितृष्णस्तृषार्तः सन् पपौ पीतवान् । गुरुणाऽऽज्ञप्तो दिलीपो नन्दिनीक्षीरं पीतवानित्यर्थः ।

( समासः ) स्तने भवं स्तन्यं नदिन्याः स्तन्यं नन्दिनीस्तन्यम् । अनिन्दित आत्मा यस्य सः । सत्सु वत्सलः सद्वत्सलः । वत्सश्च हुतं च वत्सहुते तयोरवशेषो वत्सहुतावशेषस्तम् । कृता अभ्यनुज्ञा यस्य सः । अतिशायिता तृष्णा यस्य सः ॥ ६९ ॥

*प्रातरिति* वशी जितेन्द्रियो वसिष्ठः प्रातः प्रभाते यथोक्तव्रतपारणान्ते गोसेवारूपव्रतावसाने प्रास्थानिकं यात्राकालिकं स्वस्त्ययनं शुभावहाशीर्वादं प्रयुज्य विधाय तौ दम्पती सुदक्षिणादिलीपौ स्वां स्वकीयां राजधानीं नगरीं प्रस्थापयामास गमयामास । अवसन्ने गोसेवाव्रते वसिष्ठः सभार्यं दिलीपं प्रेषयामासेत्यर्थः ।

( समासः ) यथोक्तं च तद्व्रतं तस्य पारणा तस्या अन्तः यथोक्तव्रतपारणान्तस्तस्मिन् । प्रस्थाने भवं प्रास्थानिकम् ॥ ७० ॥

*प्रदक्षिणीकृत्येति* नृपो दिलीपः हुतं तर्पितं (सन्तोषितं) हुताशं अग्निं, भर्त्तुर्वसिष्ठस्यानन्तरम् प्रदक्षिणोत्तरम् अरुन्धतीं सवत्सां धेनुं च प्रदक्षिणीकृत्य सन्मङ्गलोदग्रतरप्रभावः प्रदक्षिणादिप्रवृद्धसामर्थ्यः सन् प्रतस्थे जगाम । दिलीपोऽग्निं गुरुं तत्पत्नीं च प्रदक्षिणीकृत्य जगामेत्यर्थः ।

( समासः ) हुतमश्नातीति हुताशस्तम् । वत्सेन सहिता सवत्सा-ताम् । सन्ति च तानि मङ्गलानि सन्मङ्गलानि तैरुदग्रतरः प्रभावो यस्य सः ॥ ७१ ॥

*श्रोत्रेति* धर्मपत्नीसहितः सुदक्षिणायुक्तः सहिष्णुः सहनशीलः स नृपो दिलीपः श्रोत्राभिरामध्वनिना कर्णाह्लादजनकशब्देन अनुद्घातं सुखेन प्रस्तरादिप्रतिघातरहित-सुखकरेण रथेन स्यन्दनेन स्वेन स्वकीयेन पूर्णेन सफलेन मनोरथेन लिप्सया इव मार्गं पन्थानं ययौ गतवान् । सफलमनोरथो दिलीपो रथेन गतवानित्यर्थः ।

( समासः ) श्रोत्रयोरभिरामो ध्वनिर्यस्य स तेन । धर्मपत्न्या सहितो धर्मपत्नीसहितः । अनुद्धातोऽत एव सुखस्तेन ॥ ७२ ॥

*तमिति* अदर्शनेन अनवलोकनेन आहितौत्सुक्यं प्राप्तौत्कण्ठ्यं प्रजार्थव्रतकर्शिताङ्गं सन्तानार्थनियमक्षीणदेहं नवोदयं नूतनाभ्युदयं तं दिलीपं प्रजाः तृप्तिं सन्तोषं अनाप्नुवद्भिः अप्राप्तैः नेत्रैर्नयनैः ओषधीनां नाथं चन्द्रमिव पीतवान् ( एतत्सर्वं विशेषणं चन्द्रपक्षेऽपि योज्यम् ) अत्र पक्षे अदर्शनम् कलाक्षयनिमित्तम् । प्रजार्थे लोकहितार्थे । व्रतं देवताभ्यः कलादीनां नियमः । उदय आविर्भावः । अन्यत्तुल्यम् । सर्वाः प्रजाः दिलीपं ददृशुरित्यर्थः ।

( समासः ) आहितमौत्सुक्यं यस्य स तम् । प्रजार्थव्रतेन कर्शितानि अङ्गानि यस्य स तम् । नव उदयो यस्य स तम् ॥ ७३ ॥

*पुरन्दरश्रीरिति* पुरन्दरश्रीः शक्रतुल्यः स दिलीपः पौरैः नागरिकैः अभिनन्द्यमानः स्तूयमानः सन् उत्पताकम् उच्छ्रितध्वजम् पुरं प्रविश्य भुजगेन्द्रसमानसारे सर्पराजतुल्यबले भुजे बाहौ भूयः पुनः भूमेः पृथिव्या धुरं भारं आससञ्ज स्थापितवान् । दिलीपोऽयोध्यामेत्य पुनर्भूभारं गृहीतवानित्यर्थः ।

( समासः ) पुरन्दरस्य श्रीरिव श्रीर्यस्य सः । उदुच्छ्रिता पताका यस्मिन् तत् । भुजगेन्द्रेण समानः सारो यस्य स तस्मिन् ॥ ७४ ॥

*अथेति* अथ अनन्तरं द्यौराकाशः अत्रेस्तन्नामकर्षेः नयनसमुत्थं नेत्रोत्पन्नं ज्योतिश्चन्द्रमिव सुरसरित् गङ्गा वह्निनिष्ठ्यूतं अग्निक्षिप्तम् ऐशं शैवं तेजो वीर्यमिव राज्ञी सुदक्षिणा नरपतिकुलभूत्यै दिलीपवंशवृद्ध्यै गुरुभि र्महद्भिः लोकपालानुभावैः लोकपालांशैः अभिनिविष्टं युक्तं गर्भम् आधत्त धृतवती । आकाशश्चन्द्रमिव गङ्गा शिववीर्यमिव सुदक्षिणा गर्भमादधे इत्यर्थः ।

( समासः ) नयनात्समुत्थो नयनसमुत्थस्तम् । वह्निना निष्ठ्यूतं वह्निनिष्ठ्यूतम् । नराणां पतिः नरपतिस्तस्य कुलभूतिस्तस्यै । लोकपालानामनुभावा लोकपालानुभावास्तैः ॥ ७५ ॥

इति द्वितीयः सर्गः ।

P. L. M. d. Shrma
Barakwala
Devprayag.

## अथ तृतीयः सर्गः।



*अथेप्सितमिति* अथ अनन्तरं ( गर्भधारणोत्तरं ) सुदक्षिणा दिलीपपत्नी उपस्थितोदयं प्राप्तसमयं भर्त्तुः स्वामिनः (दिलीपस्य) ईप्सितं मनोरथम् (अत एव) सखीजनोद्वीक्षणकौमुदीमुखम् आलिदृष्टिचन्द्रिकाप्रादुर्भावम् इक्ष्वाकुकुलस्य इक्ष्वाकुनृपतिवंशस्य सन्ततेरविच्छेदस्य निदानं कारणं दौर्हृदलक्षणम् गर्भचिन्हं ( वक्ष्यमाणं ) दधौ धृतवती। सुदक्षिणा गर्भधारणोत्तरं वक्ष्यमाणं सर्वानन्दजनकं गर्भचिन्हं धृतवतीत्यर्थः।

( समासः ) उपस्थित उदयो यस्य तत्। सखीजनानामुद्वीक्षणं सखीजनोद्वीक्षणं तस्य कौमुदीमुखं सखीजनोद्वीक्षणकौमुदीमुखम्। द्विहृदयाया भावो दौर्हृदं तस्य लक्षणं दौर्हृदलक्षणम् ॥ १ ॥

*शरीरेति* शरीरसादात् देहकार्श्यात् असमग्रभूषणा परिमिताऽलङ्करणा लोध्रपाण्डुना लोध्रपुष्पेणेव धूसरवर्णेन मुखेन आस्येन (उपलक्षिता ) सा सुदक्षिणा विचेयतारका विरलनक्षत्रा तनुप्रकाशेन स्वल्पकान्तिना शशिना चन्द्रेण ( उपलक्षिता ) प्रभातकल्पा प्रभातप्राया शर्वरी रात्रिरिव अलक्ष्यत अदृश्यत ( जनैरिति शेषः )।

( समासः ) शरीरस्य सादः शरीरसादस्तस्मात्। असमग्राणि भूषणानि यस्याः सा। लोध्र इव पाण्डु लोध्रपाण्डु तेन। तनुः प्रकाशो यस्य स तनुप्रकाशस्तेन। विचेयास्तारका यस्यां सा। ईषत्प्रभाता प्रभातकल्पा ॥ २ ॥

*तदाननमिति* क्षितीश्वरो भूपतिः ( दिलीपः ) रहसि एकान्ते मृत्सुरभि मृत्तिकागन्धवत् तदाननं सुदक्षिणामुखम् उपाघ्राय घ्रात्वा शुचिव्यपाये ग्रीष्मावसाने पयोमुचां मेघानां पृषतैः बिन्दुभिः सिक्तम् उक्षितं वनराजिपल्वलं काननपङ्क्तिस्वल्पजलाशयं ( उपाघ्राय ) करी हस्ती इव तृप्तिं सन्तोषं न ययौ न प्राप। यथा हस्ती ग्रीष्मान्ते मेघबिन्दुसिक्तं वन्यजलाशयमुपाघ्राय तृप्तो न भवति तथा दिलीपोऽपि सुदक्षिणामुखमुपाघ्राय न तृप्तो बभूवेत्यर्थः।

(समासः) तस्या आननं तदाननम्। मृदः सुरभिर्मृत्सुरभिर्मृत्सुरभिरिव सुरभि यस्य तत्। क्षितेरीश्वरः क्षितीश्वरः। पयो मुञ्चन्तीति पयो

मुचस्तेषाम् । शुचेर्व्यपायः शुचिव्यपायस्तस्मिन् । वनस्य राजि र्वनराजिस्तस्याः पल्लवलम् ॥ ३ ॥

*दिवमिति* हि यतः दिगन्तविश्रान्तरथः आशान्तगामिस्यन्दनः (चक्रवर्ती) तत्सुतः सुदक्षिणापुत्रः, मरुत्वान् इन्द्रः दिवं स्वर्गमिव भुवं पृथिवीं भोक्ष्यते पालिष्यति। अतोऽस्मात्कारणात् सा सुदक्षिणा तथाविधे भूविकारे मृद्रूपे अभिलाषे भोग्यवस्तुनि अन्यरसान् इतरभोग्यार्थान् विलंघ्य विहाय मनश्चित्तं बबन्ध चक्रे। सुदक्षिणापुत्रो भुवो भोक्ता भविष्यतीति सा भुव्येव चित्तं विदधावित्यर्थः।

(समासः) दिगन्तेषु विश्रान्तो रथो यस्य सः। तस्याः सुतः तत्सुतः। अन्याश्च ते रसा अन्यरसास्तान् ॥ ४ ॥

*नेति* मागधी सुदक्षिणा ह्रिया लज्जया किञ्चित् किमपि ईप्सितम् इष्टं मे मह्यं न शंसति न कथयति केषु वस्तुषु स्पृहावती अभिलाषिणी इतीत्थम् अनुवेलं सततम् आदृतः आदरयुक्तः (सन्) प्रियासखीः सुदक्षिणासहचरीः उत्तरकोशलेश्वरो दिलीपः पृच्छति स्म पप्रच्छ। तव सखी सुदक्षिणा किं किं वस्त्वभिलष्यतीति तत्सहचरीं दिलीपोऽपृच्छदित्यर्थः।

(समासविग्रहौ) स्पृहाऽस्त्यस्या इति स्पृहावती। मगधस्याऽपत्यं स्त्री मागधी। प्रियायाः सख्यः प्रियासख्यस्ताः। उत्तरकोशलस्येश्वर उत्तरकोशलेश्वरः ॥ ५ ॥

*उपेत्येति* सा सुदक्षिणा दोहददुःखशीलतां गर्भिणीमनोरथक्लेशस्वभावताम् उपेत्य प्राप्य यद् वस्तु वव्रे आचकाङ्क्ष तत् वस्तु (भर्त्रेति शेषः) अहृतम् आनीतम् अपश्यत् दृष्टवती (अपश्यदेवेत्यर्थः)। हि यस्मात् अधिज्यधन्वन आरोपितमौर्वीकस्य अस्य भूपते र्दिलीपस्य त्रिदिवे स्वर्गेऽपि इष्टम् अभिलषितम् अनासाद्यम् अप्राप्यम् नासीत्। नहि किमपि वीरस्त्रीणामलभ्यमस्तीति भावः।

(समासः) दुःखं शीलं यस्याः सा दुःखशीला तस्या भावो दुःखशीलता ताम्। अधिज्यं धनुर्यस्य सोऽधिज्यधन्वा तस्य। आसादितुं योग्यमासाद्यं न आसाद्यमनासाद्यम् ॥ ६ ॥

*क्रमेणेति* सा सुदक्षिणा क्रमेण क्रमशः दोहदव्यथां गर्भिणीमनोरथक्लेशं च निस्तीर्य समतिक्रम्य प्रचीयमानावयवा पुष्यमाणाऽवयवा (सती) पुराणपत्रापगमात् प्राचीनपर्णनाशात् संनद्धमनोज्ञपल्लवा सञ्जातनूतनकिसलया लता वल्ली इव रराज शुशुभे। दोहदव्य-

थानिस्तरणोत्तरं पुष्यमाणशरीरा सुदक्षिणा नूतनकिसलया लतेव शोभते स्मेत्यर्थः ।

( समासः ) दोहदस्य व्यथा दोहदव्यथा ताम् । प्रचीयमाना अवयवा यस्याः सा । पुराणं च तत् पत्रं च पुराणपत्रं तस्यावगमः पुराणपत्रापगमस्तस्मात् । सन्नद्धानि मनोज्ञानि पल्लवानि यस्याः सा ॥ ७ ॥

*दिनेष्विति* दिनेषु दोहददिवसेषु गच्छत्सु अतीतेषु सत्सु नितान्तपीवरम् अतिस्थूलम् आनीलमुखम् समन्तान्नीलास्यं (नीलचूचुकं ) तदीयं सुदक्षिणासम्बन्धि स्तनद्वयं कुचयुग्मं ( कर्तृ ) भ्रमराभिलीनयोः षट्पदव्याप्तयोः सुजातयोः मनोज्ञयोः पङ्कजकोशयोः कमलकुड्मलयोः श्रियं शोभां तिरश्चकार जिगाय । सुदक्षिणास्तनद्वयं भ्रमराभिव्याप्तकमलमुकुलादपि मनोज्ञमिति भावः ।

( समासः ) नितान्तं पीवरं नितान्तपीवरम् । तस्या इदं तदीयम् । आ समन्तात् नीले मुखे यस्य तत् आनीलमुखम् । द्वयो र्भावो द्वयं स्तनयो र्द्वयं स्तनद्वयम् । भ्रमरैरभिलीने भ्रमराभिलीने तयोः । सुष्ठु शोभने जाते सुजाते तयोः । पङ्कजस्य कोशौ पङ्कजकोशौ तयोः ॥ ८ ॥

*निधानेति* नृपो दिलीपः ससत्वाम् आपन्नसत्वां ( गर्भवतीं ) महिषीं कृताभिषेकां पत्नीं निधानगर्भां निध्यन्तरां सागराम्बरां समुद्रवसनाम् ( भूमिमिव ) अभ्यन्तरलीनपावकाम् अन्तर्गतवह्निं शमीं शमीतरुमिव अन्तःसलिलाम् अन्तर्गतजलां सरस्वतीं नदीं सरितमिव अमन्यत ज्ञातवान् । सुदक्षिणाया गर्भोऽतिप्रशस्त इति भावः ।

( समासः ) निधानं गर्भे यस्याः सा निधानगर्भा ताम् । सागरोऽम्बरं यस्याः सा सागराम्बरा ताम् । अभ्यन्तरे लीनः पावको यस्याः सा अभ्यन्तरलीनपावका ताम् । अन्तः सलिलानि यस्याः साऽन्तःसलिला ताम् । सत्वेन सहिता ससत्वा ताम् ॥ ९ ॥

*प्रियेति* धीरो धैर्यवान् स राजा ( दिलीपः ) प्रियानुरागस्य सुदक्षिणास्नेहस्य मनःसमुन्नतेः चित्तौदार्यस्य ( च पुनः ) भुजार्जितानां बाहुबलसम्पादितानां दिगन्तसम्पदाम् आशान्तसम्पत्तीनाम् धृतेः पुत्रविषयसन्तोषस्य च सदृशीः अनुरूपाः पुंसवनादिकाः पुंसवनप्रभृतीः क्रिया यथाक्रमं क्रममनातिक्रम्य व्यधत्त कृतवान् । दिलीपः सुदक्षिणाविषयस्नेहाद्यनुरूपपुंसवनादिक्रियाः कृतवानित्यर्थः ।

( समासः ) प्रियायामनुरागः प्रियानुरागस्तस्य । मनसः समुन्नति

मेन समुन्नतिस्तस्याः। भुजाभ्यामर्जिता भुजार्जितास्तेषाम्। दिगन्तेषु सम्पदो दिगन्तसम्पदस्तासाम्। पुंसवनमादिर्यासां ताः॥ १०॥

*सुरेन्द्रेति* गृहागतो भवनोपस्थितो नृपो दिलीपः सुरेन्द्रमात्राश्रितगर्भगौरवात् लोकपालांशानुप्रविष्टगर्भभारात् प्रयत्नमुक्तासनया श्रमत्यक्तासनया उपचाराञ्जलिखिन्नहस्तया प्रार्थनाऽञ्जलीकरणविरलकरया पारिप्लवनेत्रया चञ्चलाक्ष्या तया सुदक्षिणया ननन्द हृष्टो बभूवेत्यर्थः। गर्भभारालसां सुदक्षिणां विलोक्य दिलीपो हृष्टो बभूवेत्यर्थः।

(समासः) सुराणामिन्द्राः सुरेन्द्रास्तेषां मात्राः सुरेन्द्रमात्रास्ताभिराश्रितो गर्भः सुरेन्द्रमात्राश्रितगर्भस्तस्य गौरवं सुरेन्द्रमात्राश्रितगर्भगौरवं तस्मात्। प्रयत्नेन मुक्तमासनं यया सा प्रयत्नमुक्तासना तया। गृहमागतो गृहागतः। उपचारस्याऽञ्जलिरुपचाराञ्जलिस्तस्मिन् खिन्नौ हस्तौ यस्याः सा उपचाराञ्जलिखिन्नहस्ता तया। पारिप्लवे नेत्रे यस्याः सा पारिप्लवनेत्रा तया॥ ११॥

*कुमारेति* अथ अनन्तरम् कुमारभृत्याकुशलैः बालचिकित्सानिपुणैः आप्तैः हितैः भिषग्भिः वैद्यैः गर्भभर्मणि गर्भभरणे अनुष्ठिते कृते सति काले दशमे मासि (दिवसपक्षे) काले ग्रीष्मावसाने प्रसवोन्मुखीं गर्भमोचनतत्परां प्रियां सुदक्षिणां आभ्रितां सञ्जातमेघां दिवम् आकाशमिव पतिः स्वामी प्रीतो हृष्टः सन् ददर्श दृष्टवान्। बालचिकित्सकैर्गर्भभरणविधानोत्तरं दिलीपो हृष्टः सन् सुदक्षिणां ददर्शेत्यर्थः।

(समासः) कुमारस्य भृत्या कुमारभृत्या तत्र कुशलास्तैः। गर्भस्य भर्म गर्भभर्म तस्मिन्। प्रसवस्योन्मुखी प्रसवोन्मुखी ताम्। अभ्राणि सञ्जातान्यस्याः साऽभ्रिता ताम्॥ १२॥

*ग्रहैरिति* ततः प्रियादर्शनोत्तरं शचीसमा इन्द्राणीतुल्या सा सुदक्षिणा समये प्रसूतिकाले (दशमे मासि) उच्चसंश्रयैस्तुङ्गस्थानस्थैः असूर्यगैः अनस्तमितैः (असूर्यसमीपवर्तिभिः) पञ्चभिः पञ्चसंख्याकैः ग्रहैः सूर्यादिभिः सूचितभाग्यसम्पदं ज्ञापितादृष्टैश्वर्यं पुत्रं सुतं त्रिसाधना प्रभाव-मन्त्रोत्साहात्मकसाधनत्रयविशिष्टा शक्तिः प्रभावादित्रयजा अक्षयम् अविनश्यन्तम् अर्थमैश्वर्यमिव असूत उत्पादयामास। यथा शक्तिरक्षयमर्थमुत्पादयति तथेयमपि सुदक्षिणा सकलगुणविशिष्टं पुत्रमुत्पादयामासेत्यर्थः।

(समासः) उच्चं संश्रयन्तीति उच्चसंश्रयास्तैः। सूर्यं न गच्छन्तीति असूर्यगास्तैः। (अथवा) सूर्यं सूर्येण वा गच्छन्तीति सूर्यगा न सूर्यगा असूर्यगा-

स्तैः । सूचिता भाग्यसम्पद्यस्य स सूचितभाग्यसम्पत् तम् । शच्या समा शचीसमा । त्रीणि साधनानि यस्याः सा । न क्षयोऽक्षयस्तम् ॥ १३ ॥

*दिश इति* तत्क्षणं तस्मिन् काले ( रघुजन्मकाले ) दिश आशाः प्रसेदुः प्रसन्ना बभूवुः, मरुतो वायवः सुखाः मनोहराः ( सुखजनकाः ) वान्तिस्म । अग्नि र्वह्निः प्रदक्षिणार्चिः प्रदक्षिणज्वालः सन् हविराज्यादिकं आददे गृहीतवान् । इत्थं सर्वं शुभशंसि शुभसूचकं बभूव, हि यतः तादृशां रघुसदृशानां नृणां भवमुत्पत्तिः लोकाऽभ्युदयाय लोकोन्नतिसाधनाय भवतीति शेषः । रघुजन्मतो देवा अपि सन्तुष्टा बभूवुरित्यर्थः ।

( समासः ) प्रकर्षेण दक्षिणाऽर्चि ज्वाला यस्य सः । शुभं शंसितुं शीलमस्येति शुभशंसि । लोकानामभ्युदयो लोकाभ्युदयस्तस्मै । तमिव पश्यन्तीति तादृशस्तेषाम् ॥ १४ ॥

*अरिष्टशय्यामिति* अरिष्टशय्यां सूतिकागृहतल्पं परितोऽभितः विसारिणा प्रसृतेन सुजन्मनः शोभनोत्पत्तेः तस्य बालस्य ( रघोः ) निजेन स्वकीयेन ( नैसर्गिकेण ) तेजसा त्विषा सहसा हठात् हतत्विषः क्षीणकान्तयो निशीथदीपाः अर्द्धरात्रप्रदीपाः आलेख्यसमर्पिताः चित्रलिखिता इव बभूवुः । रघुशरीरतेजसा निशीथदीपा अपि क्षीणतेजसो बभूवुरित्यर्थः ।

( समासः ) अरिष्टे शय्या अरिष्टशय्या ताम् । विसर्तुं शीलमस्येति विसारी तेन । सुष्ठु शोभनं जन्म यस्य स सुजन्मा तस्य । निशिथस्य निशीथे वा दीपा निशीथदीपाः । हता त्विट् येषां ते । आलेख्ये समर्पिता आलेख्यसमर्पिताः ॥ १५ ॥

*जनायेति* भूपते र्दिलीपस्य अमृतसम्मिताक्षरं सुधासमानवर्णं कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचराय अन्तःपुरचारिणे जनाय लोकाय शशिप्रभं चन्द्रवदुज्ज्वलं छत्रम् आतपत्रम् उभे युग्मे चामरे च इत्येतत् त्रयमेव अदेयम् अवितीर्यम् आसीत् अभूत् । दिलीपः सुतजन्म कथयते जनाय छत्रचामरव्यतिरिक्तं सर्वं दातुमुत्सहतेस्मेत्यर्थः ।

( समासः ) शुद्धान्ते चरतीति शुद्धान्तचरस्तस्मै । कुमारस्य जन्म कुमारजन्म । अमृतेन सम्मितान्यक्षराणि यस्मिन् तत् । दातुं योग्यं देयं न देयमदेयम् । त्रयोऽवयवा अस्येतित्रयम् । शशिनः प्रभा शशिप्रभा सेव प्रभायस्य तत् ॥ १६ ॥

*निवातेति* निवातपद्मस्तिमितेन निर्वातप्रदेशस्थकमलनिष्पन्देन चक्षुषा नेत्रेण कान्तं मनोज्ञं सुताननं पुत्रमुखं पिबतस्तृष्णया पश्यतो नृपस्य दिलीपस्य गुरुर्महान् हर्ष आनन्दः ( कर्त्ता ) इन्दुदर्शनात् चन्द्रावलोकनात् गुरुः महोदधेः समुद्रस्य पूरो जलौघ इव आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक ( अथवा ) हर्षः आत्मनि स्वमिन् विषये न प्रबभूव आत्मानि नियन्तुं न शशाक। उत्कण्ठया पुत्रमुखं पश्यतो दिलीपस्य शरीरादप्यधिको हर्षो वभूवेत्यर्थः।

(समासः) निवाते पद्मो निवातपद्मस्तद्वत् स्तिमितं निवातपद्मस्तिमितं तेन। सुतस्य आननं सुताननम्। उदकानि धीयन्तेऽस्मिन्नसावुदधिः महाँश्चासावुदधि महोदधिस्तस्य। इन्दो दर्शनमिन्दुदर्शनं तस्मात्॥ १७॥

*स इति* स जातः दिलीपसूनुः दिलीपपुत्रः तपस्विना तपोयुक्तेन पुरोधसा पुरोहितेन ( वसिष्ठेन ) तपोवनात् तन्नामकस्वनिवासस्थानात् एत्य आगत्य अखिले समग्रे जातकर्मणि जातस्य कर्तव्यसंस्कारविशेषे कृते सति प्रयुक्तसंस्कारः शाणोल्लेखनादिना संस्कृतः आकरोद्भवः खनिप्रभवः मणिरिव अधिकं बभौ वसिष्ठेन कृतसकलजातकर्मा दिलीपपुत्रस्तन्मन्त्रप्रभावात्तेजिष्ठोऽभूदित्यर्थः।

( समासः ) जातस्य कर्म जातकर्म तस्मिन्। तपोऽस्त्यस्येति तपस्वी तेन। तपसो वनं तपोवनं तस्मात्। दिलीपस्य सूनुर्दिलीपसूनुः आकरादुद्भवो यस्य सः। प्रयुक्तः संस्कारो यस्य सः॥ १८॥

*सुखश्रवेति* सुखश्रवाः श्रुतिसुखजनका मङ्गलतूर्यनिस्वना मङ्गलवाद्यध्वनयो वारयोषितां वेश्यानाम् प्रमोदनृत्यैः हर्षनर्तनैः सह मागधीपते दिलीपस्य सद्मनि गृहे एव केवलं न व्यजृम्भन्त न प्रादुर्बभूवुः किन्तु दिवौकसां देवानाम् पथि मार्गेऽपि व्यजृम्भन्त। रघुर्देवांशो देवोपकारी चेति हेतोर्देवा अपि दुन्दुभिं नादयामासुरित्यर्थः।

( समासः ) सुखः श्रवो येषां ते सुखश्रवाः। मङ्गलानि च तानि तूर्याणि मङ्गलतूर्याणि तेषां निस्वनाः। प्रमोदेन नृत्यानि प्रमोदनृत्यानि तैः। मागध्याः पति मागधीपति स्तस्य। दिव ओको येषां ते दिवौकसस्तेषाम्॥ १९॥

*नेति* रक्षितुः पालनकर्तुः तस्य दिलीपस्य संयतो बद्धो न वभूव नोऽभूत्। सुतजन्महर्षितः पुत्रोत्पत्तिप्रसन्नः सन् यं संयतं विसर्ज-

येत् मोचयेत् किन्तु स राजा तदा तस्मिन्काले पितॄणां ऋणाऽभिधानात ऋणसंज्ञकात् बन्धनात् संयमनात् केवलं स्वयमेव मुमुचे मुक्तः। दिलीपराज्ये चौर्याद्यभावेन संयतस्य कस्याप्यसद्भावेन न कमपि मुक्तवान् किन्तु पित्रर्णात्स्वयमेव मुक्त इत्यर्थः ।

( समासः ) सुतजन्मना हर्षितः सुतजन्महर्षितः । ऋणमभिधानं यस्य तत् ऋणाऽभिधानं तस्मात् ॥ २० ॥

*श्रुतस्येति* अर्थवित् अर्थज्ञः पार्थिवो भूपतिः ( दिलीपः ) अयमेषोऽर्भको बालः श्रुतस्य शास्त्रस्य अन्तं पारं यायात् गच्छेत् तथा युधि सङ्ग्रामे परेषां शत्रूणाम् अन्तं पारं च यायात् यातुं शक्नुयात् इति हेतोः धातोः (रघ) धातो र्गमनार्थम् अवेक्ष्य पर्यालोच्य आत्मसम्भवं पुत्रं नाम्ना अभिधानेन ( रघुं ) चकार कृतवान् । दिलीपो जातस्य (रघुरि)ति नामधेयं कृतवानित्यर्थः ।

( समासः ) पृथिव्या ईश्वरः पार्थिवः । अर्थं वेत्तीति अर्थवित् । सम्भवतीति सम्भवः आत्मनः सम्भवो यस्य स आत्मसम्भवस्तम् २१॥

*पितुरिति* स रघुः समग्रसम्पदः पूर्णलक्ष्मीकस्य पितु र्दिलीपस्य प्रयत्नादुद्योगात् शुभै र्मनोहरैः शरीरावयवैः कायभागैः हरिदश्वदीधितेः सूर्यस्य रश्मेः किरणस्य अनुप्रवेशात् संक्रमात् बालचन्द्रमाः क्षीणेन्दुरिव दिने दिने प्रति दिनम् वृद्धिं पुपोष । रघु र्दिलीपोद्योगात् सूर्यकिरणसंक्रमात्क्षीणेन्दुरिव प्रतिदिनं वर्द्धते स्मेत्यर्थः ।

( समासः ) समग्राः सम्पदो यस्य स समग्रसम्पत् तस्य । शरीरस्याऽवयवाः शरीरावयवास्तैः । हरितोऽश्वा यस्य स हरिदश्वस्तस्य दीधितिस्तस्याः । बालश्चासौ चन्द्रमा बालचन्द्रमाः ॥ २२ ॥

*उमावृषाङ्काविति* उमावृषाङ्कौ पार्वतीमहादेवौ शरजन्मना कार्त्तिकेयेन यथा येन प्रकारेण ननन्दतुः आनन्दं प्रापतुः शचीपुरन्दरौ इन्द्राणीशक्रौ जयन्तेन जयन्ताख्यपुत्रेण यथा ननन्दतुः तथा तत्समौ उमावृषाङ्कौ शचीपुरन्दरसदृशौ सा मागधी सुदक्षिणा नृपो दिलीपश्च तत्सदृशेन कार्त्तिकेय-जयन्तसमेन सुतेन पुत्रेण ( रघुणा ) ननन्दतुः । पार्वतीशिवौ कार्त्तिकेयेन इन्द्राणीशक्रौ जयन्तेन च यथा सुखम्प्रापतु स्तथा सुदक्षिणा-दिलीपौ रघुणा सुखम्प्रापतुरित्यर्थः ।

( समासः ) उमा च वृषाङ्कश्च उमावृषाङ्कौ । शरेषु जन्म यस्य स शरजन्मा तेन । शची च पुरन्दरश्च शचीपुरन्दरौ । ताभ्यां सदृशस्तत्सदृशस्तेन । ताभ्यां समौ तत्समौ ॥ २३ ॥

*रथाङ्गेति* रथाङ्गनाम्नोः चक्रवाकयोरिव भावबन्धनं हृदयाकर्षकं परस्पराश्रयम् अन्योऽन्यविषयं यत् प्रेम बभूव । तत्प्रेम तयोः सुदक्षिणादिलीपयोः एकसुतेन एकपुत्रेण विभक्तं कृतविभागमपि परस्परस्योपरि अन्योन्यस्योपरि पर्यचीयत वर्द्धतेस्म । सुदक्षिणा दिलीपयोः गाढप्रेम्णोः पुत्रोत्पत्त्याऽपि प्रेम्णि न न्यूनतेति भावः ।

( समासः ) रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ तयोः । भावस्य बन्धनं भावबन्धनम् । परस्परमाश्रयो यस्य तत् । एकश्चासौ सुत एकसुतस्तेन ॥ २४ ॥

*उवाचेति* सोऽर्भको बालो ( रघुः ) धात्र्या उपमात्रा प्रथममादौ उदितम् उपदिष्टं वचो वचनम् उवाच जगाद तदीयां धात्रीसम्बन्धिनीम् अङ्गुलिं कराग्रम् अवलम्ब्य धृत्वा ययौ जगाम च । प्रणिपातशिक्षया प्रणत्युपदेशेन नम्रोऽभूत् च तेन ( करणेन ) पितुर्दिलीपस्य मुदं हर्षं ततान् अवर्द्धयत् । रघुः प्रथमवचनोच्चारणादिना दिलीपमानन्दयामासेत्यर्थः ।

( समासः ) प्रथमं च तदुदितं प्रथमोदितम् । तस्या इयं तदीया ताम् । प्रणिपातस्य शिक्षा प्रणिपातशिक्षा तया ॥ २५ ॥

*तमिति* शरीरयोगजैः देहसंसर्गोत्पन्नैः सुखैरानन्दैः त्वचि त्वगिन्द्रियेऽमृतं पीयूषं निषिञ्चन्तं वर्षन्तामिव तं पुत्रं ( रघुम् ) अङ्कं क्रोडमारोप्य संस्थाप्य उपान्तसम्मीलितलोचनः प्रान्तसङ्कुचितनेत्रः सन् नृपो दिलीपः चिरात् चिरकालं सुतस्पर्शरसज्ञतां पुत्रयोगरसवित्त्वं ययौ प्राप । दिलीपः पुत्रस्पर्शादतिसुखमन्वभूदित्यर्थः ।

( समासः ) शरीरस्य योगः शरीरयोगस्तस्माज्जाताः शरीरयोगजास्तैः । उपान्तयोः सम्मीलिते लोचने यस्य सः । सुतस्य स्पर्शः सुतस्पर्शस्तस्य रसस्तं जानातीति सुतस्पर्शरसज्ञस्तस्य भावस्तत्ता ताम् ॥ २६ ॥

*अमंस्तेति* स्थिते मर्यादाया अभेत्ता पालकः स नृपो दिलीपः परार्ध्यजन्मना उत्कृष्टजन्मवता अनेन रघुणा अन्वयं वंशं प्रजानां जना(लोका)नां पतिरीशो ब्रह्मणा गुणाग्र्यवर्तिना सत्वगुणवता स्वमूर्तिभेदेन निजावतारविशेषेण ( विष्णुना ) आत्मनः सर्गं सृष्टिमिव स्थितिमन्तं प्रतिष्ठावन्तं अमंस्त मन्यते स्म । प्रजापति र्यथा उत्कृष्टजन्मवता सत्वगुणमयेन स्वावतारविशेषेण (विष्णुना) निजसृष्टिं स्थितिमतीममन्यत तथा दिलीपः श्रेष्ठजन्मना विद्याविनयादिगुणयुक्तेन देवांशरूपेण रघुणा स्वकुलं स्थिरं मन्यतेस्मेत्यर्थः ।

(समासः) परार्ध्यं जन्म यस्य स परार्ध्यजन्मा तेन। स्थितिरस्यास्तीति स्थितिमान् तम्। स्वस्य मूर्त्तिः स्वमूर्त्तिस्तस्या भेदः स्वमूर्त्तिभेदस्तेन। गुणेष्वग्र्यं गुणाग्र्यं तेन वर्तितुं शीलमस्य गुणाग्र्यवर्ती तेन ॥ २७ ॥

*स इति* (तृतीयेऽब्दे) वृत्तचूलो निष्पन्नचौलकर्मा स रघुः (पञ्चमेऽब्दे) चलकाकपक्षकैश्चञ्चलशिखण्डकैः सवयोभिस्तुल्यवयस्कैः अमात्यपुत्रैर्मन्त्रिसुतैः अन्वितो युक्तः सन् लिपेः पञ्चाशद्वर्णात्मिकाया मातृकाया यथावद्ग्रहणेन सम्यग्बोधेन (उपायभूतेन) वाङ्मयं शब्दजातम् नदीमुखेन स्रोतस्वतीद्वारेण (कश्चिज्जलजन्तुरित्यध्याहारः) समुद्रं सरित्पतिमिव आविशत् प्रविष्टवान्। चौलकर्मणि सम्पन्ने रघुर्मन्त्रिसुतैः सह नदीद्वारा समुद्रमिव मातृकायाः सम्यक् ज्ञानात् शब्दशास्त्रं प्रविवेशेत्यर्थः।

(समासः) वृत्ता चूला यस्य सः। चलाः काकपक्षका येषां ते चलकाकपक्षकास्तैः। अमात्यानां पुत्रा अमात्यपुत्रास्तैः। समानं वयो येषां ते सवयसस्तैः। नद्या मुखं नदीमुखं तेन ॥ २८ ॥

*अथेति* अथाऽनन्तरं लिपिग्रहणद्वारा शब्दशास्त्रप्रवेशोत्तरमित्यर्थः। गर्भैकादशेऽब्दे विधिवत् शास्त्रविधिना उपनीतं कृतोपनयनं गुरुप्रियं शिक्षकस्नेहिनं एनं रघुं विपश्चितो विद्वांसो गुरवः शिक्षका विनिन्युः शिक्षितवन्तः। ते गुरवोऽत्राऽस्मिन् रघौ अवन्ध्ययत्नाः सफलप्रयासाश्च बभूवुः, हि यतः वस्तूपहिता पात्रप्रयुक्ता क्रिया प्रसीदति फलति। गुरवो रघुं विधिवदुपनीय सम्यक् शिक्षयित्वा च सफलपरिश्रमा बभूवुरित्यर्थः।

(समासः) विधिना तुल्यं विधिवत्। गुरोः प्रियो गुरुप्रियस्तम्। अवन्ध्यो यत्नो येषां तेऽवन्ध्ययत्नाः। वस्तुनि उपहिता वस्तूपहिता ॥ २९ ॥

*धिय इति* उदारधीः उत्कृष्टबुद्धिः स रघुः समग्रैः सकलैः धियो गुणैः बुद्धिगुणैः चतुर्णवोपमाः समुद्रचतुष्टयसदृशाः चतस्रश्चतुःसंख्याका विद्या हरितां दिशामीश्वरः स्वामी (सूर्यः) पवनातिपातिभिः वायोरप्यधिकवेगवद्भिः हरिद्भिरश्वैः (करणभूतैः) चतस्रो दिश इव क्रमात्ततार अलङ्घ। सूर्यो यथा स्वाऽश्व द्वारा चतस्रो दिशस्तरति तथा रघुरपि प्रशस्तबुद्धिद्वारा चतस्रो विद्यास्ततारेत्यर्थः।

(समासः) उदारा धीर्यस्य स उदारधीः। चत्वारोऽर्णवा उपमा-

नो यासां ताश्चतुरर्णवोपमास्ताश्च तथोक्ताः । पवनमतिपातयितुं शीलमस्त्येषां ते पवनातिपातिनस्तैः ॥ ३० ॥

*त्वचमिति* स रघुः मेध्यां पवित्रीभूतां रौरवीं रुरुसम्बन्धिनीं त्वचं चर्म परिधाय वसित्वा मन्त्रवत् समन्त्रं अस्त्रम् आग्नेयादिकम् पितुरेव दिलीपादेव ( उपाध्यायात् ) अशिक्षत अभ्यस्तवान् तद्गुरुः रघुशिक्षकः एकपार्थिवोऽद्वितीयपृथिवीश्वर एव नाऽभूत् किन्तु क्षितौ पृथिव्यां स दिलीप एकधनुर्द्धरोऽपि अद्वितीयधनुर्वेदज्ञोऽपि अभूत् । दिलीपस्य धनुर्वेदज्ञत्वात्तत एव रघुः समन्त्रकमस्त्रमशिक्षतेत्यर्थः ।

( समासः ) रुरोरियं रौरवी ताम् । मन्त्रोऽस्त्यस्येति मन्त्रवत् । तस्य गुरुस्तद्गुरुः । एकश्चासौ पार्थिवः एकपार्थिवः । एकश्चासौ धनुर्द्धर एकधनुर्द्धरः ॥ ३१ ॥

*महोक्षतामिति* रघुः क्रमात् यौवनेन युवत्वेन भिन्नशैशवो निरस्तशिशुभावः सन् महोक्षतां महावृषभतां स्पृशन् गच्छन् वत्सतरो दम्य इव द्विपेन्द्रभावं महागजत्वं श्रयन् व्रजन् कलभः करिपोत इव गाम्भीर्यमनोहरं अचापलं सुन्दरं वपुः शरीरं पुपोष । रघुः शैशवं परित्यज्य युवत्वं प्रापेति भावः ।

( समासः ) महान् उक्षा महोक्षस्तस्य भावो महोक्षता ताम् । द्विपानामिन्द्रो द्विपेन्द्रस्तस्य भावो द्विपेन्द्रभावस्तम् । यौवनेन भिन्नं शैशवं यस्य सः । गम्भीरस्य भावो गाम्भीर्यं तेन मनोहरं गाम्भीर्यमनोहरम् ॥ ३२ ॥

*अथास्येति* अथ अनन्तरं ( युवत्वप्राप्त्युत्तरम् ) गुरुः पिता अस्य रघोः गोदानविधेः षोडशाब्दिककेशान्ताख्यकर्मणः अनन्तरं पश्चात् विवाहदीक्षां परिणयसंस्कारं निरवर्तयत् समपादयत् । ( अथेत्यध्याहार्यम् ) अथ नरेन्द्रकन्याः राजसुता दक्षसुता रोहिण्यादयस्तमोनुदं चन्द्रमिव तं रघुं सत्पतिम् अवाप्य प्राप्य आबभुः शोभन्तेस्म । यथा रोहिणीप्रभृतयश्चन्द्रम्प्राप्य शोभन्ते तथा राजसुता रघुम्प्राप्य शोभन्तेस्मेत्यर्थः ।

( समासः ) गावः केशा दीयन्ते खण्ड्यन्तेऽस्मिन्निति गोदानं तस्य विधिर्गोदानविधिस्तस्य । विवाहस्य दीक्षा विवाहदीक्षा ( अथवा ) विवाह एव दीक्षा विवाहदीक्षा ताम् । नराणामिन्द्रा नरेन्द्रास्तेषां कन्या नरेन्द्रकन्याः । संश्चासौ पतिः सत्पतिस्तम् । तमो नुदति नाशयतीति तमोनुत् तम् । दक्षस्य सुता दक्षसुताः ॥ ३३ ॥

*युवेति* युवा युवत्वविशिष्टः युगव्यायतबाहुः यानाङ्गभूतदारुविशेषदीर्घभुजः अंसलः बलवान् कपाटवक्षाः अत्यायतससारहृदयः परिणद्धकन्धरः विशालग्रीवः रघुः वपुःप्रकर्षात् यौवनकृतशरीराधिक्यात् गुरुं पितरं ( दिलीपं ) अजयत् तथापि विनयात् नम्रतया नीचैरल्पकोऽदृश्यत दृष्टः जनैरिति शेषः। शरीराधिक्यात् पितुरधिकोऽपि रघुर्विनयतोऽल्पोऽदृश्यतेत्यर्थः।

( समासः ) युगवत् बाहू यस्य सः। अंसावस्त्यस्य इत्यंसलः। कपाटवत् वक्षो यस्य सः। परिणद्धा कन्धरा यस्य सः। वपुषः प्रकर्षं वपुःप्रकर्ष तस्मात्॥ ३४॥

*तत इति* ततस्तदनन्तरम् आत्मना स्वेन चिरं बहुकालात् धृतामूढां नितान्तगुर्वी बहुगौरवयुक्तां प्रजानां धुरं भारं लघयिष्यता लघुं करिष्यता नृपेण दिलीपेन असौ रघुः निसर्गसंस्कारविनीतः स्वभावशास्त्राऽभ्यासजनितवासनानम्रः इति हेतोः युवराजशब्दभाक् लब्धयुवराजपदः चक्रे कृतः। प्रजाभारवाहित्वात्स्वभाव-शास्त्राभ्यासजनितवासनाभ्यां नम्रत्वाच्च पुत्रं युवराजं चकारेत्यर्थः।

( समासः ) नितान्तं गुर्वी नितान्तगुर्वी ताम्। लघुं करिष्यन् लघयिष्यन् तेन। निसर्गश्च संस्कारश्च निसर्गसंस्कारौ ताभ्यां विनीतो निसर्गसंस्कारविनीतः। युवराज इति शब्दं भजतीति युवराजशब्दभाक्॥ ३५॥

*नरेन्द्रेति* ( राज्यश्रीपक्षे ) गुणाभिलाषिणी विनयाद्याकाङ्क्षिणी श्रीः राज्यलक्ष्मीः नरेन्द्रमूलायतनात् दिलीपप्रधानस्थानात् अनन्तरं सन्निहितं युवराजसंज्ञितं युवराजनामकं तदास्पदं रघुरूपस्थानं ( पद्मश्रीपक्षे ) गुणाभिलाषिणी सौरभाद्याकाङ्क्षिणी श्रीः पद्माश्रया ( पद्मलक्ष्मीः ) कमलाच्चिरकालोत्पन्नात् नवावतारम् अचिरकालोत्पन्नम् उत्पलं पद्ममिव अंशेन भागेन अगच्छत् प्रापत्। स्त्रीणां यून्येव रागाधिक्यं भवतीति भावः। तथा राज्यलक्ष्मी दिलीपरूपास्पदं विहाय रघुरूपास्पदम्प्रापदित्यर्थः। यथा पद्मश्रीश्चिरोत्पन्नकमलम्विहायाऽचिरोत्पन्नकमलम्प्राप्नोति।

( समासः ) नरेन्द्र एव मूलमायतनं नरेन्द्रमूलायतनं तस्मात्। स एवास्पदं तदास्पदम्। युवराज इति संज्ञा सञ्जाताऽस्येति युवराजसंज्ञितम्। गुणानभिलषितुं शीलमस्या इति गुणाऽभिलाषिणी। नवोऽवतारो यस्य तत्॥ ३६॥

*विभावसुरिति* सारथिना सहायभूतेन वायुना पवनेन विभावसुरग्निरिव ( सारथिना ) घनव्यपायेन शरत्समयेन गभस्तिमान् सूर्य इव ( सारथिना ) कटप्रभेदेन गण्डस्फोटनेन करी हस्ती इव पार्थिवो दिलीपः तेन रघुणा अतितराम् अतिशयेन सुदुःसहः सुष्ठ्वसह्यो बभूव। वायुप्रभृतिभिरग्निप्रभृतिरिव दिलीपो रघुणा शत्रूणामतिशयोऽसह्यो बभूवेत्यर्थः ।

( समासः ) घनस्य व्यपायो घनव्यपायस्तेन। गभस्तिरस्याऽस्तीतिगभस्तिमान्। कटस्य प्रभेदः कटप्रभेदस्तेन ॥ ३७ ॥

*नियुज्येति* शतक्रतूपमः इन्द्रतुल्यः स दिलीपः राजसुतैर्नृपतिपुत्रैः अनुद्रुतम् अनुगतं धनुर्धरं वीरं तं रघुं होमतुरङ्गरक्षणे यज्ञियाऽश्वगोपने नियुज्य प्रवर्त्य एकेन क्रतुना अपूर्णमूनं ( एकोनं ) क्रतूनामश्वमेधानां शतम् अपविघ्नं निर्विघ्नम् आप प्राप। दिलीप एकोनं क्रतुशतं समाप्य शतपूर्त्तये यज्ञीयाश्वरक्षणाय रघुं साऽनुचरं नियोजयामासेत्यर्थः।

( समासः ) शतक्रतुरुपमा यस्य स शतक्रतूपमः। होमस्य तुरङ्गो होमतुरङ्गस्तस्य रक्षणं होमतुरङ्गरक्षणं तस्मिन्। धरतीति धरो धनुषोधरो धनुर्द्धरस्तम्। राज्ञां सुता राजसुतास्तैः। अपगता विघ्ना यस्मिन् यस्य वा तत् ॥ ३८ ॥

*तत इति* ततः परम् एकोनशतक्रतुप्राप्त्युत्तरं यज्वना विधिनेष्टवता तेन दिलीपेन पुनः पुनरपि मखाय यज्ञाय ( मखं कर्तुम् ) उत्सृष्टं मुक्तम् अनर्गलम् अप्रतिबन्धम् ( अव्याहतस्वैरगमनम् ) तुरङ्गम् अश्वं धनुर्भृतां धनुर्द्धराणां रक्षिणां रक्षकाणाम् अग्रतः पुरत एव शक्रः पुरन्दरः गूढविग्रहः अलक्ष्यशरीरः सन् जहार हृतवान् किल किलशब्दोऽत्रैतिह्यार्थकः। शक्रो दिलीपस्योत्सृष्टं यज्ञीयाश्वं रघुप्रभृतीनामग्रे एव हृतवानित्यर्थः।

( समासः ) धनुर्बिभ्रतीति धनुर्भृतस्तेषाम्। गूढो विग्रहो यस्य सः ॥ ३९ ॥

*विषादेति* तत् उक्तप्रकारं कुमारसैन्यं रघुसेना सपदि शीघ्रं विषादलुप्तप्रतिपत्ति इष्टनाशकृतमनोभङ्गनष्टकर्तव्यज्ञानविस्मितम् आश्चर्याविष्टं सत् स्थितं तस्थौ। अथानन्तरं श्रुतप्रभावा आकर्णितमाहात्म्या यदृच्छया स्वेच्छया आगता प्राप्ता नन्दिनी नाम वसिष्ठधेनुर्मुनिगौश्च ददृशे दृष्टा। इन्द्रकृतं यज्ञीयाश्वहरणमवलोक्य कुमारसैन्ये विषादग्रस्ते सति साहाय्यार्थमृषिधेनुस्तत्राजगामेत्यर्थः।

( समासः ) विषादेन लुप्ता प्रतिपत्तिर्यस्य तत् । कुमारस्य सैन्यं कुमारसैन्यम् । वसिष्ठस्य धेनुर्वसिष्ठधेनुः । श्रुतः प्रभावो यस्याः सा ॥ ४० ॥

*तदङ्गेति* सतां साधूनां पुरस्कृतः पूजितो दिलीपनन्दनो रघुः पुण्येन पवित्रीभूतेन तदङ्गनिस्यन्दजलेन नन्दिनीशरीरद्रवेण ( मूत्रेण ) लोचने नेत्रे प्रमृज्य शोधयित्वा अतीन्द्रियेषु इन्द्रियाण्यतिक्रान्तेषु भावेष्वपि वस्तुषु उपपन्नदर्शनः सम्पन्नसाक्षात्कारशक्तिः बभूव । रघुर्नन्दिनीमूत्रेण लोचनद्वयं संशोध्य सूक्ष्मदर्शी बभूवेत्यर्थः ।

( समासः ) तस्या अङ्गं तदङ्गं तस्य निस्यन्दस्तदङ्गनिस्यन्दः स एव जलं तदङ्गनिस्यन्दजलं तेन । इन्द्रियाण्यतिक्रान्तानि अतीन्द्रियाणि तेषु । उपपन्नं दर्शनं यस्य सः । दिलीपस्य नन्दनो दिलीपनन्दनः ॥४१॥

*स इति* नरदेवसम्भवः राजपुत्रः स रघुः पुनः पुनः मुहुर्मुहुः सूतनिषिद्धचापलं सारथिनिवारितौद्धत्यं रथरश्मिसंयतं स्यन्दनप्रग्रहबद्धम् अश्वं हरन्तं पर्वतपक्षशातनं गिरिपक्षच्छेदिनं देवमिन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श लोकतेस्म । रघुर्यज्ञीयाश्वं हरन्तमिन्द्रं पूर्वस्यां दिशि ददर्शेत्यर्थः ।

( समासः ) पर्वतानां पक्षौ पर्वतपक्षौ तयोः शातनः पर्वतपक्षशातनस्तम् । नराणां देवो नरदेवस्तस्मात्सम्भवो यस्य सः । सूतेन निषिद्धं चापलं यस्य स सूतनिषिद्धचापलस्तम् । रथस्य रश्मयो रथरश्मयस्तैः संयतो रथरश्मिसंयतस्तम् ॥ ४२ ॥

*शतैरिति* रघुस्तम् अश्वहर्तारम् अनिमेषवृत्तिभिः निमेषव्यापारशून्यैः अक्ष्णां शतैः शतसंख्यकनेत्रैः हरिभिर्हरिद्वर्णैः वाजिभिः अश्वैश्च हरिमिन्द्रं विदित्वा ज्ञात्वा एनमिन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गम्भीरेण स्वरेण नादेन निवर्तयन्निव अवोचत् उक्तवान् । रघुः शतनेत्रैरिन्द्रं विज्ञाय तमुच्चैर्जगादेत्यर्थः ।

( समासः ) न निमेषवृत्तिर्येषां तेऽनिमेषवृत्तयस्तैः । गगनं स्पृशतीति गगनस्पृक् तेन ॥ ४३ ॥

*मखांशेति* हे देवेन्द्र मनीषिभि र्विद्वद्भिः मखांशभाजां यज्ञभागभुजां मध्ये त्वमेव भवानेव प्रथम आदिर्निगद्यसे कथ्यसे तथापि अजस्रदीक्षाप्रयतस्य नित्यदीक्षातत्परस्य मद्गुरोः मत्पितुः ( दिलीपस्य ) क्रियाविघाताय यज्ञविध्वंसाय कथं प्रवर्तसे कुतः प्रवृत्तो भवसि । हे इन्द्र क्रतुप्रवर्तकस्य ( क्रतौ प्रथमपूज्यस्य ) भवतः क्रतुविघाते प्रवृत्तिरयुक्तेति भावः ।

( समासः ) मखस्यांशा मखांशास्तान् भजन्ते इति मखांशभाजस्तेषाम्। मनस ईषिणो मनीषिणस्तैः। अजस्रं दीक्षा अजस्रदीक्षा तस्यां प्रयतोऽजस्रदीक्षाप्रयतस्तस्य। क्रियाया विघातः क्रियाविघातस्तस्मै ॥४४॥

*त्रिलोकेति:* त्रिलोकनाथेन त्रैलोक्यनियामकेन दिव्यचक्षुषा अतीन्द्रियार्थदर्शिना त्वया भवता मखद्विषः क्रतुविघातकाः सदा सर्वदा नियम्या ननु शिक्ष्याः खलु। स त्वं भवान् धर्मचारिणां धर्माचरणं कुर्वतां कर्मसु क्रियासु ( क्रतुरूपेषु ) स्वयं साक्षात् अन्तरायो विघ्नो भवसि चेत् विधिरनुष्ठानं च्युतः क्षतः। त्रैलोक्यनाथे मखप्रवर्तके त्वयि मखध्वंसे प्रवृत्ते सति के नाम लोके मखं करिष्यन्ति न केऽपीत्यर्थः।

( समासः ) त्रयश्च ते लोकास्त्रिलोकास्तेषां नाथस्त्रिलोकनाथस्तेन। मखान् द्विषन्तीति मखद्विषः। दिव्यं चक्षुर्यस्य स दिव्यचक्षुस्तेन। धर्मं चरितुं शीलमेषां ते धर्मचारिणस्तेषाम् ॥ ४५ ॥

*तदङ्गमिति* हे मघवन् तत् तस्मात्कारणात् महाक्रतोरश्वमेधस्य अग्र्यं श्रेष्ठम् अङ्गं साधनम् अमुं तुरङ्गम् अश्वं प्रतिमोक्तुं प्रतिदातुमर्हसि। ( तथा हि ) श्रुतेर्वेदस्य पथो मार्गान् दर्शयितारः ( सन्मार्गप्रदर्शकाः ) ईश्वरा महान्तो जना मलीमसां मलिनां पद्धतिं मार्गं न आददते न स्वीकुर्वते। महान्तो नाऽसन्मार्गावलम्बिनो भवन्तीति मत्पितुर्यज्ञीयाश्वं दातुमर्हसीत्यर्थः।

(समासः) अग्रे भवोऽग्र्यस्तम्। महांश्चासौ क्रतुर्महाक्रतुस्तस्य ॥४६॥

*इतीति* इतीत्थं रघुणा समीरितं कथितं प्रगल्भं धृष्टं वचो वाक्यम् निशम्य श्रुत्वा दिवौकसां देवानाम् अधिपतिरीशः ( देवेन्द्रः ) रघुप्रभावात् रघुसामर्थ्यात् सविस्मयः साश्चर्यः सन् रथं स्यन्दनं निवर्तयामास च पुनः उत्तरं प्रतिवचनं प्रतिवक्तुमभिधातुं प्रचक्रमे प्रारेभे। रघुवचो निशम्य प्रतिवचनमिन्द्रोदत्तवानित्यर्थः।

( समासः ) दिव ओको येषां ते दिवौकसस्तेषाम्। विस्मयेन सहितः सविस्मयः ॥ ४७ ॥

*यदिति* हे राजन्यकुमार क्षात्रियकुमार ( त्वमितिकर्तृपदमध्याहार्यम् ) यद्वाक्यम् आत्थ ब्रवीषि तत् तथा सत्यम् तु किन्तु यशोधनैः कीर्त्तिविभवैः ( अस्मादृशैः ) परतः शत्रुतो यशः कीर्त्तिः रक्ष्यं रक्षणीयम् भवद्गुरुः त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धम् अशेषं सर्वं मम तत् यश इज्यया यागेन लङ्घयितुं तिरस्कर्तुम् उद्यत उद्युक्तः। जगति शतक्रतु रहमेव नान्यो भवत्पितुश्च शतक्रतुत्वं चोरयितुं प्रवृत्तिरतो नायमश्वो मोच्य इति भावः।

( समासः ) राजन्यस्य कुमारो राजन्यकुमारस्तत्सम्बुद्धौ । यशांसि एव धनानि येषां ते यशोधनास्तैः । जगति प्रकाशं जगत्प्रकाशम् । भवतो गुरुर्भवद्गुरुः ॥ ४८ ॥

*हरिरिति* यथा येन प्रकारेण हरि विष्णुः एक एव पुरुषोत्तमः स्मृतः कथितः यथा च त्र्यम्बकः शिव एव महेश्वरः स्मृतः कथितः नाऽपरः अपरः पुमान् न पुरुषोत्तमो नाऽपि महेश्वर इत्यर्थः । तथा तेन प्रकारेण मुनयो मां शतक्रतुं विदुः विदन्ति नोऽस्माकमेष शब्दः ( पुरुषोत्तमो–महेश्वरः–शतक्रतुरित्येवंरूपः ) द्वितीयगामी नहि । पुरुषोत्तमादिशब्दत्रयमस्मास्वेव त्रिषु नान्यस्मिन्निति भावः ।

( समासः ) पुरुषेषूत्तमः पुरुषोत्तमः । महांश्चासावीश्वरो महेश्वरः। त्रीण्यम्बकानि यस्य स त्र्यम्बकः । शतं क्रतवो यस्य स शतक्रतुस्तम् । द्वितीयं गच्छति तच्छीलो द्वितीयगामी ॥ ४९ ॥

*अत इति* यतोऽहमेव शतक्रतुरतः त्वदीयस्य पितुः ( दिलीपस्य ) अयं शततमोऽश्वः कपिलानुकारिणा कपिलमुनितुल्येन मयाऽपहारितोऽपहृतः । तव भवतोऽत्राऽस्मिन्नश्वे प्रयत्नेन प्रयासेन अलं व्यर्थम् सगरस्य तन्नामकस्य राज्ञः सन्ततेः सन्तानस्य पदव्यां मार्गे पदं चरणं मा निधाः मा स्थापय । विनाशमूलं महतामाक्रन्दनं भवतीति भावः ।

( समासः ) कपिलमनुकर्तुं शीलमस्येति कपिलानुकारी तेन । तवाऽयं त्वदीयस्तस्य ॥ ५० ॥

*तत इति* ततस्तदनन्तरं तुरगस्याऽश्वस्य रक्षिता रक्षको (रघुः) प्रहस्य प्रहासं कृत्वा अपभयो निर्भीकः सन् पुनः पुनरपि पुरन्दरं शक्रं बभाषे उक्तवान् । ( यदुक्तं तदाह ) हे देवेन्द्र ! यदि एषोऽश्वमोचनरूपस्ते तव सर्गो निश्चयः तर्हि शस्त्रं गृहाण भवान् रघुं माम् अनिर्जित्य कृती कृतकृत्यो न खलु । नाश्वं दास्यति चेत्तर्हि युद्धं कुर्विति भावः ।

( समासः ) अपगतं भयं यस्य सोऽपभयः । कृतमनेनेति कृती ५१॥

*स इति* स रघुः उन्मुखः उत्थापिताननः सन् मघवन्तम् इन्द्रम् एवमुक्त्वा अभिधाय शरासनं चापं सशरं सबाणं करिष्यमाणो विधास्यमानः आलीढविशेषशोभिना आलीढाख्यस्थानभेदाऽतिशयशोभिना वपुःप्रकर्षेण देहौन्नत्येन विडम्बितेश्वरः अनुकृतापिनाकी सन् अतिष्ठत् स्थितवान् । रघुरुक्तवचोऽभिधाय योद्धुमुद्यतो बभूवेत्यर्थः ।

( समासः ) उत् ऊर्ध्वं मुखं यस्य सः। शरेण सहितं सशरम्। शरा अस्यन्तेऽस्मिन्निति शरासनम्। आलीढेन विशेषं शोभितुं शीलमस्य आलीढविशेषशोभी तेन। वपुषः प्रकर्षः वपुःप्रकर्षस्तेन। विडम्बित ईश्वरो येन सः॥ ५२॥

*रघोरिति* रघोरवष्टम्भमयेन स्तम्भरूपेण पत्रिणा बाणेन हृदि चेतसि क्षतो विद्धः अत एव अमर्षणः असहनः गोत्रभित् इन्द्रोऽपि नवाम्बुदानीकमुहूर्तलाञ्छने नूतनमेघवृन्दक्षपामात्रचिन्हभूते धनुषि शरासने ( दिव्ये धनुषि ) अमोघम् अबन्ध्यं सायकं बाणं समधत्त संनिहितवान्। हृदि रघुशरविद्धः पुरन्दरोऽपि रघुं व्यद्धुं धनुषि बाणं स्थापितवानित्यर्थः।

( समासः ) गोत्रं भिनत्तीति गोत्रभित्। मृष्यतीति मर्षणो न मर्षणोऽमर्षणः। नवाश्च तेऽम्बुदा नवाम्बुदास्तेषामनीकं तस्य मुहूर्तं लाञ्छनं यस्य तत् नवाम्बुदानीकमुहूर्तलाञ्छनं तस्मिन्॥ ५३॥

*दिलीपसूनोरिति* भीमासुरशोणितोचितो भयङ्करदैत्यरुधिरपरिचितः स इन्द्रमुक्त आशुगो बाणः दिलीपसूनो रघोः बृहद्भुजान्तरं विशालबाहुमध्यं (वक्षः) प्रविश्य अनास्वादितपूर्वं पूर्वमनास्वादितं मनुष्यशोणितं मानवरुधिरं कुतूहलेन कौतुकेन इव पपौ पीतवान्। इन्द्रयुक्तो बाणो मनुष्य (रघु) शोणितमुत्कण्ठया पीतवानित्यर्थः।

( समासः ) दिलीपस्य सूनुर्दिलीपसूनुस्तस्य। भुजयोरन्तरं भुजान्तरं बृहच्च तद्भुजान्तरं बृहद्भुजान्तरम्। ( अथवा ) बृहतौ च तौ भुजौ बृहद्भुजौ तयोरन्तरं बृहद्भुजान्तरम्। भीमश्चासावसुरो भीमासुरस्तस्य शोणितं भीमासुरशोणितं तत्रोचितो भीमासुरशोणितोचितः। न आस्वादितं पूर्वं यस्य तत् अनास्वादितपूर्वम्। आशु गच्छतीति आशुगः। मनुष्यस्य शोणितं मनुष्यशोणितम्॥ ५४॥

*हरेरिति* कुमारविक्रमः स्कन्दसामर्थ्यः कुमारो रघुरपि सुरद्विपास्फालनकर्कशाङ्गुलौ ऐरावतस्पर्शकठिनकराग्रे शचीपत्रविशेषकाङ्किते इन्द्राणीपत्रविशेषचिन्हिते हरेरिन्द्रस्य भुजे बाहौ स्वनामचिन्हं स्वनामाङ्कितं सायकं बाणं निचखान स्थापितवान्। रघुरपि शक्रबाहौ बाणं निखातवानित्यर्थः।

( समासः ) कुमारविक्रम इव विक्रमो यस्य सः। सुराणां द्विपः सुरद्विपस्तस्य आस्फालनं सुरद्विपास्फालनं तेन कर्कशा अङ्गुलयो यस्य स सुरद्विपास्फालनकर्कशा[ङ्गु]लिस्तस्मिन्। शच्याः पत्रविशेषकं शचीपत्र-

विशेषकं तेनाऽङ्कितं शचीपत्रविशेषकाङ्कितं तस्मिन् । स्वस्य नाम स्वनाम स्वनाम्नश्चिन्हं यस्मिन् स स्वनामचिन्हस्तम् ॥ ५५ ॥

*जहारेति* अन्येन इतरेण मयूरपत्त्रिणा मयूरपत्रवता शरेण बाणेन शक्रस्य इन्द्रस्य महाशनिध्वजं बृहदशनिरूपपताकं जहार चिच्छेद । स शक्रः सुरश्रियः देवलक्ष्म्याः प्रसह्य हठात् केशव्यपरोपणात् केशच्छेदनात् इव तस्मै रघवे भृशमत्यर्थं चुकोप क्रुध्यतिस्म । रघुबाणव्याकुलीकृतः शक्रो रघुम्प्रति क्रुध्यतिस्मेत्यर्थः ।

( समासः ) मयूरस्य पत्राणि मयूरपत्राणि तानि सन्त्यस्येति मयूरपत्री तेन । महांश्चासावशनि र्महाशनिः स ध्वजो यस्य स महाशनिध्वजस्तम् । केशानां व्यपरोपणं केशव्यपरोपणं तस्मात् ॥ ५६ ॥

*तयोरिति* जयैषिणो र्जयाकाङ्क्षिणोस्तयोरिन्द्ररघ्वोः गरुत्मदाशीविषभीमदर्शनैः सपक्षसर्पभयानकावलोकनैः अधोमुखैः नीचाननैः ऊर्द्ध्वमुखैः उन्नतास्यैः पत्त्रिभि र्बाणैः उपान्तस्थितसिद्धसैनिकं तटस्थदेवसैन्यं तुमुलं भयानकं युद्धं सङ्ग्रामो बभूव जातः । इन्द्रो रघुश्च सकलजनभीतिकरं युद्धं चक्रतुरित्यर्थः ।

( समासः ) उपान्ते स्थिताः सिद्धाः सैनिकाश्च यस्मिन् तत् । आशिषि विषं येषां ते आशीविषाः गरुत्मन्तश्च ते आशीविषाश्च गरुत्मदाशीविषास्तेषामिव भीमदर्शनं येषां ते गरुत्मदाशीविषभीमदर्शनास्तैः । जयमेषितुं शीलमनयोस्तौ जयैषिणौ तयोः । अधो मुखं येषां तेऽधोमुखास्तैः । ऊर्द्ध्वं मुखं येषां ते ऊर्द्ध्वमुखास्तैः ॥ ५७ ॥

*अतिप्रबन्धेति* वासव इन्द्रः अतिप्रबन्धप्रहितास्त्रवृष्टिभिः अतिसातत्यप्रयुक्तास्त्रवर्षणैः दुष्प्रसहस्य दुःखेनाऽप्यसह्यस्य तेजसः प्रतापस्य आस्पदं स्थानं तं रघुम् अम्बुदो मेघोऽद्भि र्जलैः स्वतश्च्युतं निर्गतं बन्हिम् अग्निमिव निर्वापयितुं न शशाक न समर्थोऽभूत् । यथा मेघो जलैः स्वतो निर्गतं वज्ररूपं बह्निं शमयितुमसमर्थो भवति तथा शक्रोऽपि लोकपालात्मकस्य रघोः स्वांशरूपत्वेन तं शमयितुं समर्थो नाऽभूदित्यर्थः ।

( समासः ) अतिशयितः प्रबन्धोऽतिप्रबन्धस्तेन प्रहिता अतिप्रबन्धप्रहिता अस्त्रस्य वृष्टयोऽस्त्रवृष्टयः अतिप्रबन्धप्रहिताश्च ता अस्त्रवृष्टयोऽतिप्रबन्धप्रहितास्त्रवृष्टयस्ताभिः । दुःखेन प्रसोढुमशक्यं दुःप्रसहं तस्य । अम्बूनि ददातीत्यम्बुदः ॥ ५८ ॥

*तत इति* ततस्तदनन्तरं रघु र्दिलीपसूनुः हरिचन्दनाङ्किते श्री-

खण्डचन्दनलिप्ते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं संश्रुश्यमानोदधिगम्भीरघोषिणीं विडौजसः शक्रस्य शरासनज्यां चापमौर्वीं शशाङ्कार्द्धमुखेन चन्द्रखण्डफलेन पत्रिणा बाणेन अलुनात् चिच्छेद । रघु र्निजेन चन्द्रार्द्धमुखेन बाणेन शक्रचापमौर्वीं चिच्छेदेत्यर्थः ।

(समासः) हरिचन्दनेनाऽङ्कितं हरिचन्दनाङ्कितं तस्मिन् । प्रमथ्यमानश्चासावर्णवः प्रमथ्यमानार्णवः स इव धीरं नदति तच्छीलेति प्रमथ्यमानार्णवधीरनादिनी ताम् । शशाङ्कस्य अर्द्धः शशाङ्कार्द्धः स इव मुखं यस्य स शशाङ्कार्द्धमुखस्तेन । शरासनस्य ज्या शरासनज्या ताम् । वेवेष्टीति विट् ( व्यापकम् ) तादृशमोजो यस्य स विडौजास्तस्य ॥५९॥

*स इति* विवृद्धमत्सर इन्द्रः शक्रः चापं शरासनम् उत्सृज्य परित्यज्य प्रबलस्य बलिष्ठस्य विद्विषः शत्रोः प्रणाशनाय वधाय महीध्रपक्षव्यपरोपणोचितं पर्वतपक्षच्छेदपरिचितं स्फुरत्प्रभामण्डलं देदीप्यमानकान्तिसमूहम् अस्त्रम् आददे गृहीतवान् । शक्रः क्रुद्धः सन् रघुं घातयितुं वज्रं जगृहे इत्यर्थः ।

( समासः ) विवृद्धो मत्सरो यस्य सः । प्रकृष्टं बलं यस्य स प्रबलस्तस्य । विशेषेण द्वेष्टीति विद्विट् तस्य । महीं धारयन्तीति महीध्रास्तेषां पक्षा महीध्रपक्षास्तेषां व्यपरोपणं महीध्रपक्षव्यपरोपणं तत्रोचितम् । स्फुरत् देदीप्यमानं प्रभामण्डलं यस्य तत् ॥ ६० ॥

*रघुरिति* रघु र्दिलीपपुत्रः तेन वज्रेण भृशमत्यर्थं वक्षसि हृदये ताडितो हतः सन् सैनिकाश्रुभिः सैन्यनेत्रजलैः सह भूमौ पृथिव्यां पपात । निमेषमात्रात् मुहूर्तं यावत् तद्व्यथां वज्रायुधपीडाम् । अवधूय तिरस्कृत्य सैनिकहर्षनिःस्वनैः सैन्यानन्दशब्दैः सह उत्थितः । वज्रपीडिते रघौ भूमौ पतिते सति तत्सैनिका रुरुदुस्तस्मिन्नुत्थिते सति ते मोदन्ते स्मेत्यर्थः ।

( समासः ) सैनिकानामश्रूणि सैनिकाश्रूणि तैः । निमेषमेव निमेषमात्रं तस्मात् । तस्य व्यथा तद्व्यथा ताम् । हर्षेण निःस्वना हर्षनिःस्वनाः सैनिकानां हर्षनिःस्वनाः सैनिकहर्षनिःस्वनास्तैः ॥ ६१ ॥

*तथापीति*तथाऽपि वज्रपातेऽपि शस्त्रव्यवहारनिष्ठुरे आयुधव्यापारक्रूरे विपक्षभावे शात्रवे चिरं बहुकालं तस्थुषः स्थितवतोऽस्य रघोः वीर्याऽतिशयेन पराक्रमाधिक्येन वृत्रहा इन्द्रस्तुतोष प्रसन्नो बभूव, गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदमाङ्घ्रि र्निधीयते स्थाप्यते । गुणानां

शत्रुवशीकरणेऽपि हेतुत्वात्स्वयं वीरः शक्रो रघुं वीरं ज्ञात्वा प्रसन्नो बभूवेत्यर्थः।

(समासः) शस्त्राणां व्यवहारः शस्त्रव्यवहारस्तत्र निष्ठुरः शस्त्रव्यवहारनिष्ठुरस्तस्मिन्। विपक्षस्य भावो विपक्षभावस्तस्मिन्। वीर्यस्याऽतिशयो वीर्यातिशयस्तेन ॥ ६२ ॥

*असङ्गमिति* सारवत्तया बलवत्तया अद्रिषु पर्वतेषु अपि असङ्गम् अप्रतिबन्धं मे मम आयुधं वज्रं त्वदन्येन भवदतिरिक्तेन न विसोढं न सहनीयम। अतो मां प्रीतं सन्तुष्टम अवेहि जानीहि तुरङ्गमादृते अश्वं विहाय किम् इच्छसि अभिलष्यसि इति इत्थं वचो वासव इन्द्रः स्फुटं स्पष्टम् आह ब्रवीतिस्म। तुरङ्गमादन्यद्यद्वाञ्छसि तत्सर्वं दास्यामीति भावः।

(समासः) न सङ्गमसङ्गम्। सारोऽस्यास्तीति सारवान् तस्य भावः सारवत्ता तया। त्वत् अन्यस्त्वदन्यस्तेन ॥ ६३ ॥

*तत इति* ततस्तदनन्तरं निषङ्गात् तूणीरात् असमग्रम् असम्पूर्णम् उद्धृतं निस्सारितं सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् स्वर्णपक्षकान्तिशोभितकराग्रम् इषुं बाणं प्रतिसंहरन् निवर्तयन् प्रियम्वदो मधुरभाषी नरेन्द्रसूनुः रघुः सुरेश्वरं पुरन्दरम्प्रत्यवदत् उक्तवान्। पुनर्बाणप्रहारं करिष्यमाणो रघुः किमपि विचिन्त्येन्द्रम्प्रत्युक्तवानित्यर्थः।

(समासः) न समग्रमसमग्रम्। सुवर्णस्य पुङ्खौ सुवर्णपुङ्खौ तयोर्द्युतिः सुवर्णपुङ्खद्युतिस्तया रञ्जिता अङ्गुलयो येन स सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिस्तम्। नरेन्द्रस्य सूनुर्नरेन्द्रसूनुः। प्रियम्वदतीति प्रियम्वदः सुराणामीश्वरः सुरेश्वरस्तम् ॥ ६४ ॥

*अमोच्यमिति* हे प्रभो इन्द्र! अश्वं तुरङ्गम अमोच्यम् अत्याज्यं मन्यसे यदि ज्ञायसे चेत् ततस्तर्हि अजस्रदीक्षाप्रयतः अनवरतदीक्षोद्यतः स मद्गुरुः मम पिता विधिना नियमेनैव कर्मणि अनुष्ठाने समाप्ते पूर्णे सति क्रतोः यज्ञस्य अशेषेण समग्रेण फलेन प्रयोजनेन युज्यताम् युक्तोऽस्तु। मम पितुर्यज्ञीयाश्वं न दास्यसि चेत्तर्हि तं समग्रक्रतुफलेन योजये त्यर्थः। अश्वमेधफलप्राप्तौ सत्यां किमश्वेनेति भावः।

(समासः) मोक्तुं योग्यो मोच्यो न मोच्योऽमोच्यस्तम्। अजस्रं दीक्षा अजस्रदीक्षा तस्यां प्रयतोऽजस्रदीक्षाप्रयतः। मम गुरुर्मद्गुरुः ॥ ६५ ॥

*यथेति* सद्योगतः गृहम्प्राप्तः त्रिलोचनैकांशतया शिवभागतया

दुरासदो दुष्प्राप्यः विशाम्पतिः राजा यथा येन प्रकारेण इमं वृत्तान्तं तव भवतः सन्देशहरात् दूतात् एव शृणोति आकर्णयति, हे लोकेश इन्द्र! तथा विधीयताम् क्रियताम् । मद्गुरुस्तव दूतद्वारा यथेमं वृत्तं शृणुयात्तथा कुर्वित्यर्थः ।

( समासः ) त्रीणि लोचनानि यस्य स त्रिलोचनः एकश्चासावंश एकांशस्त्रिलोचनस्यैकांशस्त्रिलोचनैकांशस्तस्य भावस्त्रिलोचनैकांशता तया । दुःखेनासीदितुमशक्या दुरासत् तस्य । सन्देशं हरतीति सन्देशहरस्तस्मात् । लोकानामीशो लोकेशस्तत्सम्बुद्धौ ॥ ६६ ॥

*तथेतीति* मातलिसारथिः शक्रः कामं ( रघोर्मनोरथम् ) तथेति तथाऽस्त्विति प्रतिशुश्रुवान् प्रतिज्ञायमानः सन् यथागतं ययौ गतवान् । सुदक्षिणासूनुः रघुरपि नाऽतिप्रमनाः नाऽतीव तुष्टः सन् नृपस्य दिलीपस्य सदो गृहं प्रति न्यवर्तत आजगाम । इन्द्रो रघुमनोरथं प्रतिज्ञाय गृहं जगाम, रघुरपि गृहम्प्रति निवृत्त इत्यर्थः ।

( समासः ) मातलिः सारथि र्यस्य सः । नातिशयेन प्रकृष्टं हृष्टं मनो यस्य सः । सुदक्षिणायाः सूनुः सुदक्षिणासूनुः ॥ ६७ ॥

*तमिति* हरेरिन्द्रस्य शासनहारिणा दूतेन प्रथमं पूर्वं प्रबोधितो ज्ञापितः प्रजेश्वरो दिलीपः हर्षजडेन आनन्दशिशिरेण पाणिना हस्तेन कुलिशव्रणाङ्कितं वज्रव्रणाचिन्हितं तदीयं रघुसम्बन्धि अङ्गं शरीरं परामृशन् स्पृशन् सन् तं रघुम् अभ्यनन्दत् आशिषा समवर्द्धयत् । इन्द्रदूतेन वृत्तम्बोधितो दिलीपः करेण रघुशरीरं स्पृशन् तं प्रशशंसेत्यर्थः ।

( समासः ) प्रजानामीश्वरः प्रजेश्वरः । शासनं हरति तच्छीलः शासनहारी तेन । हर्षेण जडो हर्षजडस्तेन । तस्येदं तदीयम् कुलिशस्य व्रणं कुलिशव्रणं तेनाऽङ्कितं कुलिशव्रणाङ्कितम ॥ ६८ ॥

*इतीति* महनीयशासनः पूजनीयाज्ञः क्षितीशो दिलीप इत्यनेन प्रकारेण महाक्रतूनामश्वमेधानां नवाधिकां नवतिम् एकोनशतम् आयुषः क्षये मृते सति दिवं स्वर्गं समारुरुक्षुः अरोढुमिच्छुः सोपानपराम्परां सोपानपङ्क्तिमिव ततान विस्तारितवान् । स्वर्गमारुरुक्षुर्दिलीपोऽश्वमेधानामेकोनशतं सोपानपंक्तिमिव विस्तारितवानित्यर्थः ।

( समासः ) क्षितेरीशः क्षितीशः । नव अधिका यस्यां सा नवाधिका ताम् । महान्तश्च ते क्रतवो महाक्रतवस्तेषाम् । महनीयं शासनं यस्य सः । सोपानस्य परम्परा सोपानपरम्परा ताम ॥ ६९ ॥

*अथेति* अथानन्तरं विषयव्यावृत्तात्मा विषयनिवृत्तचित्तः स

दिलीपो यथाविधि शास्त्रानुसारेण यूने तरुणाय सूनवे पुत्राय नृपतिककुदं राजचिन्हं सितातपवारणं श्वेतच्छत्रं दत्वा तया देव्या ( सुदक्षिणया ) सह मुनिवनतरुच्छायां ऋषिकाननपादपच्छायां शिश्रिये सेवितवान्। तथाहि गलितवयसां व्यतीतावस्थानाम् ( वृद्धानाम ) इक्ष्वाकूणाम् इक्ष्वाकुगोत्रापत्यानाम ( राज्ञां ) इदं वनगमनं कुलव्रतं वंशधर्मः। दिलीपो रघवे राज्यं दत्वा वाणप्रस्थं स्वीकृतवानित्यर्थः।

( समासः ) विषयेभ्यो व्यावृत्त आत्मा यस्य स विषयव्यावृत्तात्मा। विधिमनतिक्रम्य यथाविधि। नृपतेः ककुद् नृपतिककुद् तम्। आतपस्य वारणमातपवारणं सितञ्च तत् आतपवारणं सितातपवारणम्। मुने र्वनं मुनिवनं तस्य तरु र्मुनिवनतरुस्तस्य छाया मुनिवनतरुच्छायाताम्। गलितानि वयांसि येषां ते गलितवयसस्तेषाम्। कुलस्य व्रतं कुलव्रतम्॥ ७०॥

इति तृतीयः सर्गः

---

# अथ चतुर्थः सर्गः ।

*स इति* स रघुः गुरुणा पित्रा ( दिलीपेन ) दत्तं समर्पितं राज्यं प्रजारक्षणरूपं राज्ञां कर्म ( अथवा ) प्रजाऽऽधिपत्यम् प्रतिपद्य समासाद्य ( प्राप्य ) दिनान्ते वासराऽवसाने ( सायं समये ) सवित्रा भानुना निहितं स्थापितं ( दत्तं ) तेजः प्रतापं प्रतिपद्य हुताशनो वन्हिरिव अधिकं विशेषरूपेण बभौ भासतेस्म । सन्ध्याकाले वन्हिर्यथा सूर्यतेजः प्राप्याऽधिकं भासते तथैवायं रघुरपि पितृदत्तराज्यम्प्राप्याऽधिकं भासतेस्मेत्यर्थः ।

( विग्रहसमासौ ) राज्ञः कर्म राज्यम् । दिनस्यान्तो दिनान्तस्तस्मिन् । हुतमश्नातीति हुताशनः ॥ १ ॥

*दिलीपेति* दिलीपानन्तरं दिलीपोत्तरं राज्ये प्रजाऽऽधिपत्ये प्रतिष्ठितं अवस्थितं तं रघुं निशम्य श्रुत्वा पूर्वं दिलीपकाले राज्ञां नृपाणां हृदये चेतसि प्रधूमितः प्रकर्षेण सञ्जातधूमः अग्निः सन्तापाग्निः उत्थितः प्रज्वलित इव आसीत् अभूत् दिलीपराज्यकाले प्रतिपक्षिणां राज्ञां हृदि सन्तापाग्निः सधूम आसीत् इदानीं रघुराज्यकाले तेषां राज्ञां हृदयस्थितः सन्तापाग्निः प्रज्वलितो जात इत्यर्थः ।

( समासः ) दिलीपस्यानन्तरं दिलीपानन्तरम् । राज्ञः कर्म राज्यं तस्मिन् । प्रकर्षेण धूमः सञ्जातोऽस्येति प्रधूमितः ॥ २ ॥

*पुरुहूतेति* पुरुहूतध्वजस्य इन्द्रध्वजस्य इव तस्य रघो र्नवाऽभ्युत्थानदर्शिन्यो नूतनाऽभ्युदयमवलोकिन्यः उन्नयनपङ्क्तयः ऊर्ध्वप्रस्थितनेत्रराजयः सप्रजाः पुत्रादिसहिताः प्रजाः प्रकृतयो ननन्दुरत्यानन्दं प्रापुः । यथा वर्षागमकाले शक्रध्वजाऽभिनवोन्नतिं द्रष्टुकामा लोका ऊर्ध्वचक्षुषा पश्यन्तो मोदन्ते तथाऽस्यापि रघोरचिरप्राप्तराज्योन्नतिमवलोकयन्त्यः प्रजा अधिकतरं मोदन्तेस्मेत्यर्थः ।

( समासः ) पुरुहूतस्य ध्वजः पुरुहूतध्वजस्तस्य । उत् ऊर्ध्वं प्रस्थिता नयनपङ्क्तयो यासां ता उन्नयनपङ्क्तयः । नवं च तदभ्युत्थानं नवाभ्युत्थानं तत्पश्यन्ति तच्छीला इति नवाभ्युत्थानदर्शिन्यः । प्रजाभिः सहिताः सप्रजाः ॥ ३ ॥

*सममेवेति* द्विरदगामिना करिगमनेन तेन रघुणा समं युगपदेव

पित्र्यं पितुरागतं सिंहासनं राज्यासनम् अखिलं सम्पूर्णम् अरिमण्डलं शत्रुसमुदायश्चेत्येतत् द्वयं सममक्रान्तमधिष्ठितम् । रघुरेकदैव सिंहासनं शत्रुमण्डलञ्चाक्रान्तवानित्यर्थ ।

( समासः ) द्विरद इव द्विरदैश्च गच्छतीति द्विरदगामी तेन । पितुरागतं पित्र्यम् । अरीणां मण्डलमरिमण्डलम् ॥ ४ ॥

*छायेति* पद्मा लक्ष्मीः स्वयमदृश्या किल साक्षात् अदृश्या सती छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन पद्मातपत्रेण कमलरूपच्छत्रेण साम्राज्यदीक्षितं मण्डलाधिपत्याऽभिषिक्तं तं रघुं भेजे सिषेवे । पद्माश्रया लक्ष्मीरपि पद्मरूपछत्रद्वारा रघुं सेवितवतीत्यर्थः ।

( समासः ) छायानां मण्डलं छायामण्डलं तेन लक्ष्यं छायामण्डललक्ष्यं तेन । न दृश्या अदृश्या । पद्मं च तदातपत्रं च पद्मातपत्रं तेन । साम्राज्ये दीक्षितः साम्राज्यदीक्षितस्तम् ॥ ५ ॥

*परिकल्पितेति* सरस्वती वाग्देवी काले काले सर्वेषु योग्यकालेषु बन्दिषु स्तुतिपाठकेषु परिकल्पितसान्निध्या कृतसन्निधाना सती स्तुत्यं स्तोत्रार्हं तं रघुम् अर्थ्याभिः अर्थयुक्ताभिः स्तुतिभिः स्तोत्रैः उपतस्थे तुष्टाव । वाग्देवी रघुं देवताबुद्ध्या तुष्टावेत्यर्थः ।

( समासः ) परिकल्पितं सान्निध्यं यया सा । स्तोतुं योग्यः स्तुत्यस्तम् । अर्थादनपेता अर्थ्यास्ताभिः ॥ ६ ॥

*मनुप्रभृतीति* वसुन्धरा पृथिवी मनुप्रभृतिभि र्मन्वादिभिः मान्यैः पूज्यैः राजभिर्नृपतिभिः भुक्ता रक्षिता यद्यपि भुक्तैव । तथापि तद्यपि तस्मिन् राज्ञि ( रघौ ) अनन्यपूर्वा अनन्यभुक्ता इव आसीत् अभूत । पृथिवी रघौ तत्प्रथमपतिकेवानुरागवती बभूवेत्यर्थः ।

( समासः ) मनुः प्रभृतिरादिर्येषां ते मनुप्रभृतयस्तैः । मानितुं योग्या मान्यास्तैः । अन्यः पूर्वो यस्याः साऽन्यपूर्वा न अन्यपूर्वाऽनन्यपूर्वा । धरन्तीति धरा वसूनां धरा वसुन्धरा ॥ ७ ॥

*स इति* हि यतः स रघुः युक्तदण्डतया यथापराधदण्डतया नातिशीतोष्णः समशीतोष्णो दक्षिणो नभस्वान् वायुरिव सर्वस्य निखिलस्य लोकस्य मनश्चित्तम आददे जहार । यथा दक्षिणोवायु र्लोकानां मनो हरति तथा रघुरपि लोकानां मनोहरतिस्मेत्यर्थः ।

( समासः ) युक्तो दण्डो यस्य स युक्तदण्डस्तस्य भावो युक्तदण्डता तया । न अतिशीतोऽत्युष्णो वा भवतीति नाऽतिशीतोष्णः ॥ ८ ॥

९

*मन्देति* तेन रघुणा गुरौ पितरि ( दिलीपविषये ) सहकारस्य अतिसौरभचूतस्य फलेन पुष्पोद्गमः कुसुमोदय इव गुणाधिकतया गुणगौरवेण हेतुना प्रजाः प्रकृतीः मन्दोत्कण्ठा अल्पौत्सुक्याः कृता विहिताः । प्रजाभिः रघुगुणेन दिलीपगुणो विस्मृत इति भावः ।

( समासः ) मन्द उत्कण्ठा येषां ते मन्दोत्कण्ठाः । गुणा अधिका यस्य स गुणाधिकस्तस्य भावो गुणाऽधिकता तया । पुष्पाणामुद्गमः पुष्पोद्गमः ॥ ९ ॥

*नयेति* नयविद्भिः नीतिशास्त्रज्ञैः नवे नूतने तस्मिन् राज्ञि (रघौ) विषये सत् धर्मयुद्धादिकम् असत् कूटयुद्धादिकं चोपदर्शितं पूर्वपक्ष एवाऽभवत् उत्तरः पक्षो नाऽभवत् । नवोऽपि राजा रघुः सर्वं धर्मकूटयुद्धादिकं सम्यक् वेत्तीति भावः ।

( समासः ) नयं विदन्तीति नयविदस्तैः ॥ १० ॥

*पञ्चानामितिः* पञ्चानामपि भूतानां पृथिव्यादीनां गुणा गन्धादय उत्कर्षमाधिक्यं पुपुषुः पुष्यन्तिस्म । रघौ नवे महीपाले राज्ञि सति सर्वं निखिलं वस्तुजातं नवमिव अभवत् । रघौ राज्ञि सति भूतपूर्वमपि वस्तुजातं सम्प्रत्यभूतपूर्वमिवाऽभूदित्यर्थः ॥ ११ ॥

*यथेति* यथा येन प्रकारेण चन्द्रो विधुः प्रह्लादनात् आह्लादकरणात् अन्वर्थोऽनुगतार्थनामकोऽभूत् यथा च तपनः सूर्यः प्रतापात् सन्तापजननात् अन्वर्थोऽभूत् तथैव स राजा ( रघुः ) प्रकृतिरञ्जनात् प्रजासुखजननात् अन्वर्थः सार्थकराजशब्दोऽभूत् । रघुः सूर्यचन्द्राविव सार्थकराजशब्दो बभूवेत्यर्थः ।

( समासः ) अनुगतोऽर्थो यस्य सोऽन्वर्थः । प्रकृतीनां रञ्जनं प्रकृतिरञ्जनं तस्मात् ॥ १२ ॥

*काममिति* विशाले विस्तृते तस्य रघो लोचने नेत्रे कामं यथा तथा कर्णान्तविश्रान्ते श्रोत्रप्रान्तगते ( आस्तामिति क्रियाशेषः ) तस्य चक्षुष्मत्ता तु चक्षुः फलं तु सूक्ष्मकार्यार्थदर्शिना सूक्ष्मकर्तव्यार्थप्रकाशिना शास्त्रेण शास्त्रेणैव ( आसीदिति क्रियाशेषः ) विवेकिनां शास्त्रदृष्टेः प्रसिद्धत्वाद्रघुरपि शास्त्रदृष्ट्यैव कार्यं करोति स्मेत्यर्थः ।

( समासः )कर्णयोरन्तं कर्णान्तं तत्पर्यन्तं विश्रान्ते कर्णान्तविश्रान्ते । चक्षुरस्त्यस्येति चक्षुष्मान् तस्य भावश्चक्षुष्मत्ता । कार्यस्यार्थः कार्यार्थः सूक्ष्मश्चासौ कार्यार्थः सूक्ष्मकार्यार्थस्तं पश्यति तच्छीलः सूक्ष्मकार्यार्थदर्शी तेन ॥ १३ ॥

*लब्धेति* अथानन्तरं पङ्कजलक्षणा पद्मचिन्हा शरद् लब्धप्रशमनस्वस्थम् प्राप्तराज्यस्थिरीकरणसमाहितचित्तम् एनं रघुं द्वितीया अपरा पार्थिवश्रीः राजलक्ष्मीरिव समुपस्थिता प्राप्ता। रघोर्दिग्विजयाय शरदृतुः प्राप्त इति भावः।

(समासः) लब्धस्य प्रशमने लब्धप्रशमनं तेन स्वस्थो लब्धप्रशमनस्वस्थस्तम्। पार्थिवस्य श्रीः पार्थिवश्रीः। पङ्कजं लक्षणं यस्याः सा ॥ १४ ॥

*निर्वृष्टेति* निर्वृष्टलघुभिः निश्शेषवर्षणाऽगुरुभिः मेघै र्जलदैः मुक्तवर्त्मा त्यक्तमार्गः अत एव सुदुःसहः तस्य रघो र्दिलीपसूनोः भानोः सूर्यस्य च प्रतापः (रघुपक्षे) पौरुषं (सूर्यपक्षे) आतपश्च युगपदेकदा दिशो हरितो व्यानशे व्याप। अतीते वर्षाकाले शरदि प्राप्तायां मेघो न सूर्यप्रतापमवरुणद्धि राज्ञां च दिग्विजयाय मार्गं च न रुणद्धीति भाव;।

(समासः) निश्शेषं वृष्टा निर्वृष्टा अत एव लघवो निर्वृष्टलघवस्तैः। मुक्तं वर्त्म यस्य सः। सुष्ठु दुःखेन सोढुमशक्यः सुदुःसहः ॥ १५ ॥

*वार्षिकमिति* इन्द्रः शक्रः वार्षिकं वर्षानिमित्तं धनुश्चापं जहार हृतवान् रघुः जैत्रं जयनशीलं धनुश्चापं दधौ गृहीतवान् हि यतः तौ इन्द्ररघू प्रजार्थसाधने वृष्टिविजयरूपप्रकृतिसम्पादनविषये पर्यायोद्यतकार्मुकौ क्रमेण गृहीतचापौ (आस्तामिति क्रियाशेषः)। इन्द्रो वृष्ट्या प्रजार्थसम्पादनं कृतवान् रघुश्च विजयेन प्रजार्थसम्पादनं कृतवानित्यर्थः।

(समासः) प्रजानामर्थाः प्रजार्थास्तेषां साधनं प्रजार्थसाधनं तस्मिन्। पर्यायेणोद्यते कार्मुके याभ्यां तौ पर्यायोद्यतकार्मुकौ ॥ १६ ॥

*पुण्डरीकेति* पुण्डरीकातपत्रः सिताम्भोजच्छत्रः विकसत्काशचामरः प्रफुल्लकाशाख्यतृणचामरः ऋतुः शरदृतुः तं पुण्डरीकसदृशातपत्रं काशसदृशचामरं रघुं विडम्बयामास अनुचकार पुनः किन्तु तच्छ्रियं रघुशोभां न प्राप न लेभे। शरदृतुः रघुमनुकुर्वन्नपि तच्छोभां न प्रापेत्यर्थः।

(समासः) पुण्डरीकमेवातपत्रं यस्य सः। विकसन्ति काशान्येव चामराणि यस्य सः। तस्य श्रीस्तच्छ्रीस्ताम ॥ १७ ॥

*प्रसादेति* प्रसादसुमुखे प्रसन्नतासौम्यानने तस्मिन् रघौ विशदप्रभे निर्मलकान्तौ चन्द्रे विधौ च द्वयोरुभयो र्विषय तदा तास्मन् का-

ले चक्षुष्मतां नेत्रवतां प्रतीतिरनुरागः समरसा तुल्ययोगा आसीत् अ-भूत् । जना यथा चन्द्रं पश्यन्तः सुखिनस्तथा रघुं पश्यन्तोऽपीत्यर्थः ।

( समासः ) सुष्टु शोभनं मुखं यस्य स सुमुखः प्रसादेन सुमुखः प्रसादसुमुखस्तस्मिन् । विशदा प्रभा यस्य स विशदप्रभस्तस्मिन् । चक्षुरस्त्येषामिति चक्षुष्मन्तस्तेषाम् । समो रसो यस्याः सा ॥ १८ ॥

*हंसश्रेणीति* हंसश्रेणीषु मरालपङ्क्तिषु तारासु नक्षत्रेषु कुमुद्वत्सु कुमुदप्रायेषु वारिषु जलेषु तदीयानां रघुसम्बन्धिनां यशसां कीर्त्तीनां विभूतयः सम्पदः पर्यस्ता इव प्रसारिताः किम् रघुयशसामतिविशदत्वाद्धंसश्रेणीप्रभृतिषु तद्यशोविभूतिभ्रम इति भावः ॥ १९ ॥

*इक्षुच्छायेति* इक्षुच्छायनिषादिन्यः इक्षुच्छायोपविष्टाः शालिगोप्यः सस्यपालिकाः ( कर्त्र्यः ) गोप्तुः रक्षकस्य तस्य रघोः गुणोदयं गुणोत्पन्नम आकुमारकथोद्घातं कुमारपर्यन्तकथारम्भं यशः कीर्त्तिं जगु गायन्तिस्म । सस्यपालिकाः स्त्रियो रघुयशो गायन्तिस्मेत्यर्थः ।

( समासः ) इक्षूणां छाया इक्षुच्छायं तत्र निसीदन्ति तच्छीला इक्षुच्छायनिषादिन्यः । गुणेभ्य उदयो यस्य तत् । कथाया उद्घातः कथोद्घातः कुमारादारभ्य कथोद्घातो यस्य तत् ॥ २० ॥

*प्रससादेति* महौजसोऽधिकसामर्थ्यवतः कुम्भयोनेः अगस्त्यस्य उदयात् अगस्त्योदयमारभ्येत्यर्थः । अम्भो जलं प्रससाद स्वच्छं बभूव । महौजसो रघोरुदयात् अभिभवाशङ्कि पराभवशङ्कमानं द्विषतां शत्रूणां मनश्चित्तं चुक्षुभे क्षोभं प्राप । अगस्त्योदयादम्भो निर्मलं बभूव । रघूदयाच्छत्रुमनः सकलुषं बभूवेत्यर्थः ।

( समासः ) कुम्भो योनिर्यस्य स कुम्भयोनिस्तस्य । महदोजो यस्य स महौजास्तस्य । अभिभवमाशङ्कितुं शीलमस्येति अभिभवाशङ्कि ॥ २१ ॥

*मदोदग्रा इति* मदोदग्रा मदोद्धताः ककुदमन्तो महाककुदः सरितां नदीनां कूलमुद्रुजा तटविदारका महोक्षा बलीवर्दाः लीलाखेलं विलाससुभगं तस्य रघो विक्रमं पराक्रमम् अनुप्रापुरनुचक्रुः । महावृषभा उत्साहवतो वपुष्मतः शत्रुविनाशकस्य रघोः शौर्यमनुचक्रुरित्यर्थः ।

( समासः ) मदेनोदग्रा मदोदग्राः । ककुदेषामस्तीति ककुद्मन्तः । कूलान्युद्रुजन्तीति कूलमुद्रुजाः । महान्त उक्षाणो महोक्षाः ॥ २२ ॥

*प्रसवैरिति* मदगन्धिभिः मदामोदैः सप्तपर्णानां वृक्षविशेषाणां प्रसवैः पुष्पैः आहतास्ताडिताः तन्नागा रघुगजाः असूयया ईर्ष्ययेव

सप्तधैव सप्तधारा इव प्रसुस्त्रुवुः मदं ववृषुः। सप्तपर्णतरुपुष्पताडिता रघुदिग्गजा ताडननिमित्तया स्पर्द्धयेव सप्तधाराभिर्मदं ववृषुरित्यर्थः।

( समासः मदस्येव गन्धो येषां ते मदगन्धयस्तैः। तस्य नागा-स्तन्नागाः। सप्तप्रकारा सप्तधा ॥ २३ ॥

*सरित इति* सरितो नदी गाधा गम्भीराः कुर्वती विदधती: पथो मार्गान् च अश्यानकर्दमान् शुष्कपङ्कान् कुर्वती शरद् शरदृतुः तं रघुं शक्तेरुत्साहशक्तेः प्रथमं प्राक् यात्रायै दिग्विजयाय चोदयामास प्रेरयामास। शरदृतुः प्रभावमन्त्रशक्तिसम्पन्नं रघुं स्वयमुत्साहय-तीत्यर्थः।

( समासः ) अश्यानः कर्दमो येषु तेऽश्यानकर्दमास्तान् ॥ २४ ॥

*तस्मा इति* वाजिनीराजनाविधौ अश्वनीराजनाख्यशान्तिकर्मणि सम्यग् विधिवत् हुतः होमसमिद्धो बन्हिराग्निः प्रदक्षिणार्चिर्व्याजेन प्रदक्षिणज्वालाछद्मेन हस्तेन करेण इव तस्मै रघवे जयं ददौ दत्त-वान्। होमसमिद्धो वन्हिः प्रदक्षिणज्वालाछद्मना रघवे जयं दत्तवा-नित्यर्थः।

( समासः ) वाजिनां नीराजनाविधिर्वाजिनीराजनाविधिस्तस्मिन्। प्रगता दक्षिणं प्रदक्षिणं प्रदक्षिणं याऽर्चिः सा प्रदक्षिणार्चिस्तस्या व्या-जः प्रदक्षिणार्चिर्व्याजस्तेन ॥ २५ ॥

*स इति* गुप्तमूलप्रत्यन्तः सुरक्षितवासस्थानप्रान्तदुर्गः शुद्धपा-र्ष्णिः उद्धृतपृष्ठशत्रुः ( सेनया रक्षितपृष्ठदेशो वा ) अयान्वितः शुभ-दैवान्वितः स रघुः षड्विधं षट्प्रकारं मौलभृत्यादिरूपं बलं सैन्यम् आदाय गृहीत्वा दिग्जिगीषया दिशां जेतुमिच्छया प्रतस्थे प्रस्थानं कृतवान्। रघुर्वासस्थानं प्रान्तदुर्गं च संरक्ष्य पृष्ठशत्रुश्चोद्धृत्य शुभदैवयुक्तः सन् दिग्विजयाय प्रस्थानं कृतवानित्यर्थः।

( समासः ) गुप्तौ मूलं प्रत्यन्तश्च येन सः। शुद्धः पार्ष्णि र्यस्य सः। अयेनाऽन्वितोऽयान्वितः। जेतुमिच्छा जिगीषा दिशां जिगीषा दिग्जि-गीषा तया ॥ २६ ॥

*अवाकिरन्निति* वयोवृद्धाः अधिकवयस्काः पौरयोषितः पौर-स्त्रियः तं रघुं ( प्रयान्तं ) लाजैराचारलाजैः मन्दरोद्धूतैः मन्दराचलो-त्क्षिप्तैः पृषतैर्बिन्दुभिः क्षीरोर्मयः क्षीरसमुद्रतरङ्गा अच्युतं विष्णुमिव अवाकिरन् पर्यक्षिपन्। यथा क्षीरसमुद्रतरङ्गा मन्दराचलोत्क्षिप्तबिन्दु-भिर्विष्णुं पर्यक्षिपन् तथा पौरस्त्रियः प्रस्थितं रघुमाचारलाजैः पर्यक्षि-पन्नित्यर्थः।

( समासः ) वयसा वृद्धा वयोवृद्धाः। पुरे भवाः पौरास्तेषां योषितः पौरयोषितः। मन्दरेणोद्धूता मन्दरोद्धूतास्तैः। क्षीरस्योर्मयः क्षीरोर्मयः॥ २७॥

*स इति* प्राचीनबर्हिषा तन्नाम्ना केनचिन्महाराजेन तुल्यः सदृशः स रघुः अनिलोद्धूतैः वायुप्रेरितैः केतुभिर्ध्वजैः अहितान् शत्रून् तर्जयन् भर्त्सयन् इव प्रथमं प्राक् प्राचीं दिशमाशां ययौ गतवान्। रघुर्दिग्विजयाय पूर्वं प्राचीं दिशं जगामेत्यर्थः।

( समासः ) अनिलेनोद्धूता अनिलोद्धूतास्तैः॥ २८॥

*रजोभिरिति* स्यन्दनोद्धूतैः रथोत्क्षिप्तैः रजोभिः धूलिभिः घनसन्निभैः वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैः गजैश्च ( यथाक्रमम् ) व्योम आकाशं भुवस्तलं पृथ्वीतलमिव भूतलं च व्योमाकाशमिव कुर्वन् विदधत् ययाविति पूर्वेणान्वयः॥ २९॥

*प्रताप इति* अग्रे प्रथमं प्रतापस्तेजोविशेषो ययौ ततस्तदुत्तरं शब्दः सेनाकलकलो ययौ तदनन्तरं तत्पश्चात् परागो धूलिः ययौ पश्चात् रथादि रथाश्वादिकं चतुरङ्गबलम् इतीत्थं चतुस्कन्धा चतुर्व्यूहा इव सा चमू रघुसेना ययौ गतवती। रघुसेना प्रतापादिव्यूहचतुष्टयोपलक्षिता ययावित्यर्थः।

( समासः ) रथ आदिर्यस्य तत् रथादि। चत्वारः स्कन्धा यस्याः सा चतुःस्कन्धा॥ ३०॥

*मरुपृष्ठानीति* स रघुः शक्तिमत्त्वात् सामर्थ्यवत्त्वात् मरुपृष्ठानि निर्जलस्थानानि उदम्भांसि उद्भूतजलानि चकार कृतवान् नाव्याः नाभिस्तार्या नदीः सरितः सुप्रतराः सुखेन तार्याः चकार कृतवान् विपिनानि अरण्यानि प्रकाशानि निर्वृक्षाणि चकार कृतवान्। रघोरतिशक्तिमत्त्वान्नासाध्यं किमप्यस्तीति भावः।

( समासः ) मरोः पृष्ठानि मरुपृष्ठानि। उद्गतमम्भो येषु तानि उदम्भांसि। नाभिस्तार्या नाव्याः। सुखेन प्रतराः सुप्रतराः शक्तिरस्यास्तीति शक्तिमान् तस्य भावः शक्तिमत्त्वं तस्मात्॥ ३१॥

*स इति* महतीं बृहतीं सेनां चमूं पूर्वसागरगामिनीं पूर्वसमुद्राभिमुखीं कर्षन् कुर्वन् रघुः हरजटाभ्रष्टां शिवजटापतितां गङ्गां पूर्वसागरगामिनीं कर्षन् भगीरथ इव बभौ शोभते स्म। यथा भगीरथो निजपूर्वपुरुषोद्धरणाय शिवजटातो निस्सृतां गङ्गां पूर्वसागरगामिनीं कुर्वन् बभौ तथाऽयमपि रघुर्दिग्विजयाय सेनां पूर्वसागरगामिनीं कुर्वन् बभावित्यर्थः।

( समासः ) पूर्वश्चासौ सागरः पूर्वसागरस्तं गच्छति तच्छीला पूर्वसागरगामिनी ताम्। हरस्य जटा हरजटास्ताभ्यो भ्रष्टा हरजटा-भ्रष्टा ताम् ॥ ३२ ॥

( त्याजितैरिति ) फलं लाभं त्याजितैः हापितैः उत्खातैः स्वपदाच्च्यावितैः बहुधा भग्नैः रणे जितैः नृपैः राजभिः ( वृक्षपक्षे ) फलप्रसवं त्याजितैः नाशितैः उत्खातैरुत्पाटितैः बहुधा भग्नैः छिन्नैः पादपैः वृक्षैः दन्तिनो गजस्येव तस्य रघोर्मार्गः पन्थाः उल्वणः प्रकाश आसीत् बभूव। यथोत्पाटितादितरुभिः दन्तिनो मार्गः प्रकाशो भवति तथोत्खातादि-नृपैरघोर्मार्गः प्रकाश आसीदित्यर्थः ॥ ३३ ॥

*पौरस्त्यानिति* जयी जयनशीलो रघुः एवममुना प्रकारेण पौरस्त्यान् प्राच्यान् तान् तान् सर्वान् जनपदान् देशान् आक्रामन् तालीवनश्यामं महोदधेः समुद्रस्योपकण्ठमन्तिकं प्राप। रघुः सकलजनपदानाक्रामन् समुद्रतटं प्रापेत्यर्थः।

( समासः ) पुरोभवाः पौरस्त्यास्तान्। तालीनां वनानि तालीवनानि तैः श्यामं तालीवनश्यामम् ॥ ३४ ॥

*अनम्राणामिति* अनम्राणामुद्धतानां समुद्धर्तुः उन्मूलयितुः तस्माद्रघोः सकाशात् सिन्धुरयात् नदीवेगादिव सुह्मैः सुह्मदेशीयैः क्षत्रियैः वैतसीं वैतसःसम्बन्धिनीं वृत्तिं व्यापारं ( प्रणतिं ) आश्रित्य अवलम्ब्य आत्मा संरक्षितः। यथा वेतो नम्रतामाश्रित्य नदीवेगादात्मानं रक्षति तथा सुह्मदेशीया अपि नम्रतामाश्रित्य रघोः सकाशादात्मानं रक्षन्ति स्मेत्यर्थः।

( समासः ) न नम्रा अनम्रास्तेषाम्। सिन्धोरयः सिन्धुरयस्तस्मात्। वेतस इयं वैतसी ताम् ॥ ३५ ॥

*वङ्गानिति*नेता नायकः स रघुः नौसाधनोद्यतान् तरण्युपायसन्नद्धान् वङ्गान् वङ्गदेशीयान् राज्ञः तरसा बलेन उत्खाय उन्मूल्य गङ्गास्रोतोऽन्तरेषु सुरसरित्प्रवाहमध्यप्रदेशेषु ( द्वीपेषु ) जयस्तम्भान् जयसूचकस्थूणान् निचखान् स्थापितवान्। रघुर्वङ्गदेशीयान् राज्ञो विजित्य गङ्गाप्रवाहान्तरालेषु जयस्तम्भं स्थापितवानित्यर्थः।

( समासः ) नावश्च ताः साधनानि नौसाधनानि तैरुद्यता नौसाधनोद्यतास्तान्। जयार्थाः स्तम्भा जयस्तम्भास्तान्। गङ्गायाः स्रोतांसि गङ्गास्रोतांसि तेषामन्तरा गङ्गास्रोतोऽन्तरास्तेषु ॥ ३६ ॥

*आपादेति* आपादपद्मप्रणताः पादपद्मपर्यन्तं नम्राः अत एवो-

त्खातप्रतिरोपिताः उद्धृतस्थापिताः ते वङ्गाः कलमाः शालिविशेषा इव फलैर्धनैः सम्वर्द्धयामासुः ( आपादपद्मेत्यादि विशेषणद्वयं शालि पक्षेऽपि योज्यम् ) यथा पादपद्ममूलपर्यन्तं प्रणताः पूर्वमुद्धृताः पश्चात्स्थापिताः कलमाः शालिविशेषाः सस्यै र्लोकं सम्वर्द्धयन्ति तथा वङ्गा अपि तथाभूता रघुं धनैः सम्वर्द्धयामासुरित्यर्थः ।

( समासः ) पादपद्ममारभ्य प्रणता आपादपद्मप्रणताः पूर्वमुत्खाताः पश्चात्प्रतिरोपिता उत्खातप्रतिरोपिताः ॥ ३७ ॥

*स इति* स रघु र्बद्धद्विरदसेतुभिः संयतकरिसेतुभिः सैन्यैः सेनासमुदायैः ( सह ) कपिशां तन्नाम्नीं नदीं तीर्त्वा समुत्तीर्य उत्कलादर्शितपथः उत्कलदेशीयराजसन्दर्शितमार्गः सन् कलिङ्गाभिमुखः कलिङ्गदेशं जिगमिषुः ययौ गतवान् रघुरुत्कलदेशं विजित्य कलिङ्गदेशं विजेतुं गतवानित्यर्थः ।

( समासः ) बद्धाश्च ते द्विरदा बद्धद्विरदास्त एव सेतवो बद्धद्विरदसेतवस्तैः । उत्कलै र्दर्शितः पन्था यस्य सः । कलिङ्गस्याभिमुखः कलिङ्गाभिमुखः ॥ ३८ ॥

*स इति* स रघुः महेन्द्रस्य कुलपर्वतविशेषस्य मूर्ध्नि शिखरे तीक्ष्णं दुःसहं प्रतापं तेजः यन्ता सारथिः गम्भीरवेदिनः मत्तप्रायस्य गजविशेषस्य मूर्ध्नि मस्तके तीक्ष्णं तीव्रम् (निशितं) अङ्कुशमिव न्यवेशयत् निक्षिप्तवान् । यथा हस्तिपको गम्भीरवेदिनो गजस्य मस्तके निशितमङ्कुशं प्रवेशयति तथा रघुर्महेन्द्रपर्वतस्य शिखरे दुःसहं प्रतापं न्यवेशयदित्यर्थः ।

(विग्रहः) गम्भीरं वेत्ति तच्छीलो गम्भीरवेदी तस्य ॥ ३९ ॥

*प्रतिजग्राहेति* गजसाधनः करिसहायः सन् कालिङ्गः कलिङ्गदेशाधिपः अस्त्रैरायुधैस्तं रघुं ( राजानं ) पक्षच्छेदोद्यतं पक्षखण्डनोद्युक्तं शक्रमिन्द्रं शिलावर्षी पाषाणवर्षणशीलः पर्वतो गिरिरिव प्रतिजग्राह प्रत्यभियुक्तवान् । यथा पर्वतो निजपक्षघातिनमिन्द्रं शिलावर्षणैः प्रतिजग्राह तथा कलिङ्गदेशाधिपो निजराज्योच्छेदिनं रघुमस्त्रैः प्रतिजग्राहेत्यर्थः ।

( समासः ) कलिङ्गानां राजा कालिङ्गः । गजः साधनं यस्य स गजसाधनः । पक्षाणां छेदः पक्षच्छेदस्तस्मिन्नु द्यतः पक्षच्छेदोद्यतस्तम् । शिलां वर्षति तच्छीलः शिलावर्षी ॥ ४० ॥

*द्विषामिति* काकुत्स्थो रघुः तत्र महेन्द्रपर्वते द्विषां शत्रूणां नाराचदुर्दिनं बाणविशेषवर्षणं विसह्य सहित्वा सन् यथाशास्त्रं मङ्गल स्नातो विजयमङ्गलार्थमभिषिक्त इव जयश्रियं विजयलक्ष्मीं प्रतिपेदे प्राप। यथा जयश्रीकामुकः शास्त्ररीत्या मङ्गलार्थमभिषिक्तः सन् जयश्रियं लभते तथा रघुरपि शत्रुबाणवर्षणस्नातः सन् जयश्रियं लब्धवानित्यर्थः।

( समासः ) नाराचानां दुर्दिनं नाराचदुर्दिनम् । मङ्गलार्थे स्नातो मङ्गलस्नातः । जयस्य श्री जयश्रीस्ताम् ॥ ४१ ॥

*ताम्बूलीनामिति* तत्र महेन्द्रपर्वते योद्धा रघुसैनिकाः रचितापानभूमयः कल्पितपानयोग्यप्रदेशाः सन्तः नारिकेलासवं नारिकेलमद्यं ताम्बूलीनां नागवल्लीनां दलैः पत्रैः पपुः पीतवन्तः शात्रवं शत्रुसम्बन्धि यशः कीर्त्तिं च पपुः हृतवन्तः । रघुसैनिका महेन्द्रपर्वते नारिकेलमद्यं पानेन सह शत्रुयशो जह्रुरित्यर्थः।

( समासः ) रचिता आपानभूमयो यैस्ते । नारिकेलस्याऽऽसवो नारिकेलासवस्तम । शत्रोरिदं शात्रवम् ॥ ४२ ॥

*गृहीतेति* धर्मविजयी धर्मार्थविजयशीलः स नृपो भूपतिः (रघुः) गृहीतप्रतिमुक्तस्य आत्तपरित्यक्तस्य महेन्द्रनाथस्य कलिङ्गाधिपस्य श्रियं लक्ष्मीं जहार हृतवान् मेदिनीं पृथिवीं तु न जहार । रघुः कलिङ्गदेशाधिपतेः श्रियं जहार शरणागतवात्सल्यान्मेदिनीं न जहारेत्यर्थः ।

( समासः ) गृहीतश्चासौ प्रतिमुक्तश्च गृहीतप्रतिमुक्तस्तस्य । धर्मार्थो विजयी धर्मविजयी । महेन्द्रस्य नाथो महेन्द्रनाथस्तस्य ॥४३॥

* तत इति * ततः प्राचीविजयानन्तर फलवत्पूगमालिना फलितक्रमुकश्रेणीमता वेलातटेन समुद्रकूलेनैव अगस्त्याचरितां कुम्भयोन्यधिष्ठिताम् आशां दिशाम् अनाशास्यजयः अप्रार्थनीयविजयः सन् ययौ गतवान् । रघुः प्राचीं दिशां विजित्य दक्षिणां दिशां विजेतुं गतवानित्यर्थः ।

( समासः ) वेलायास्तटं वेलातटं तेन । फलानि सन्त्येषामिति फलवन्तस्ते च ते पूगाश्च फलवत्पूगास्तेषां माला फलवत्पूगमाला साऽस्त्यस्येति फवत्पूगमाली तेन । अगस्त्येनाऽऽचरिता अगस्त्याचरिता ताम् । अनाशास्यो जयो यस्य सोऽनाशास्यजयः ॥ ४४ ॥

* स इति* स रघुः गजदानसुगन्धिना करिमदसुरभिणा सैन्यपपरिभोगेन सैनिकावगाहनेन कावेरीं नाम नदीं सरितां पत्युः समुद्रस्य शङ्कनीयाम् अविश्वसनीयामिव अकरोत् विदधौ । यथा परपुरुष-

सम्भोगेन नारीं पत्युरविश्वसनीयां करोति तथैव स रघुः स्वसैन्यावगाहनेन कावेरीं समुद्रस्य पत्युरविश्वसनीयां कृतवानित्यर्थः ।

( समासः ) सैन्यानां परिभोगः सैन्यपरिभोगस्तेन । गजानां दानानि गजदानानि तैः सुगन्धोऽस्त्यस्येति गजदानसुगन्धिस्तेन । शङ्कितुं योग्या शङ्कनीया ताम् ॥ ४५ ॥

*बलैरिति* विजिगीषोः विजेतुमिच्छोः गताध्वनः लङ्घितमार्गस्य तस्य रघोः बलैः सैन्यैः मारीचोद्भ्रान्तहारीताः मरीचवनपरिभ्रान्तहारितपक्षिविशेषाः मलयाद्रेः मलयपर्वतस्य उपत्यका आसन्नभूमयः अध्युषिताः वासस्थानीकृताः । रघुसैन्या मलयपर्वताऽऽसन्नभूमिषु अध्युषितवन्त इत्यर्थः ।

( समासः ) विजेतुमिच्छुः विजिगीषुस्तस्य गतोऽध्वा येन स गताध्वा तस्य । मरीचाणमिदं मारीचं मारीचे उद्भ्रान्ता हारीता यासु ताः ॥ ४६ ॥

*ससञ्जुरिति* अश्वक्षुण्णानां वाजिचूर्णितानाम् एलानाम् एलालतानाम् उत्पातिष्णवः उत्पतनशीलाः फलरेणवः फलरेजांसि तुल्यगन्धिषु समानामोदेषु मत्तेभकटेषु उन्मत्तगजगण्डेषु ससञ्जुः मिमिलुः ।

( समासः ) अश्वैः क्षुण्णा अश्वक्षुण्णास्तेषाम् उत्पतितुं शीलमेषां त उत्पतिष्णवः । तुल्यो गन्धोऽस्त्येषां तुल्यगन्धयस्तेषु मत्ताश्च ते इभा मत्तेभास्तेषां कटा मत्तेभकटास्तेषु । फलानां रेणवः फलरेणवः॥४७॥

*भोगीति* चन्दनानां चन्दनवृक्षाणां भोगिवेष्टनमार्गेषु सर्पवेष्टनाङ्किषु समर्पितं सञ्जितं त्रिपदीच्छेदिनां पादशृङ्खलाछेदकानामपि करिणां हस्तिनां ग्रैवं कण्ठबन्धनं नाऽस्रसत् स्रस्तं नाऽभूत् ।

( समासः ) भोगिनां वेष्टनं भोगिवेष्टनं तस्मान्मार्गा भोगिवेष्टनमार्गास्तेषु । त्रिपदीं छिन्दन्ति तच्छीलास्त्रिपदीछेदिनस्तेषाम् ॥ ४८ ॥

*दिशीति* दक्षिणस्यामवाच्यां दिशि दिशायां रवेः सूर्यस्यापि तेजः प्रतापो मन्दायते मन्दं भवति तस्यामेव दक्षिणस्यामेव दिशि आशायां पाण्ड्याः पाण्डुजनपदराजानः रघोः प्रतापं तेजो न विसेहिरे न सोढवन्तः । सूर्यादपि रघोः प्रतापो विशेष इति भावः ।

( विग्रहः ) मन्दमिवाचरति मन्दायते । पाण्डूनां राजानः पाण्ड्याः ॥ ४९ ॥

*तामेति* ते पाण्ड्याः ताम्रपर्णीसमेतस्य ताम्रपर्णीनदीसङ्गतस्य महोदधेः समुद्रस्य सम्बन्धि मुक्तासारं मौक्तिकवरं स्वं स्वकीयं संचि-

तं राशीकृतं यशः कीर्त्तिमिव तस्मै रघवे निपत्य प्रणिपत्य ददुः दत्त वन्तः। पाण्डुदेशाधिपाः चिरसंचितं यश इव मौक्तिकवरं रघवे ददुरि-त्यर्थः।

( समासः ) ताम्रपर्ण्या समेतस्ताम्रपर्णीसमेतस्तस्य। मुक्तानां सा-रो मुक्तासारस्तम्॥ ५०॥

* स इति। असह्येति * युग्ममिदम्। सहैवास्य श्लोकद्वयस्य व्या-ख्या। असह्यविक्रमः असहनीयपराक्रमः स रघुः तटेषु सानुषु आ-लीनचन्दनौ व्याप्तचन्दनवृक्षौ ( स्तनपक्षे ) तटेषु अलीनचन्दनौ व्या-प्तचन्दनानुलेपौ। तस्या दक्षिणस्या दिशः स्तनौ कुचौ इव स्थितौ मलयदर्दुरौ तन्नामानौ शैलौ पर्वतौ यथाकामं निर्विश्य उपभुज्य उद-न्वता समुद्रेण दूरान्मुक्तं दूरतस्त्यक्तं स्रस्तांशुकं गलितवस्त्रं मेदिन्याः पृ-थिव्याः नितम्बमिव ( स्थितं ) सह्यं तन्नामानं पर्वतम् अलङ्घयत् प्रा-प्तवान् यथा कश्चिन्नायकः कस्याश्चिन्नायिकायाः स्तनावुपभुज्य नि-तम्बमुपभुंक्ते तथा रघुः दक्षिणादिग्रूपनायिकायाः स्तनभूतं मलय-दर्दुरपर्वतद्वयमुपभुज्य ( अतिक्रम्य ) तस्या नितम्बभूतं सह्यनामपर्व-तमतिक्रान्तवानित्यर्थः॥ ५१॥ ५२॥

*तस्यानीकैरिति* अपरान्तजयोद्यतः पाश्चात्यविजयतत्परैः विस-र्पद्भिर्गच्छद्भिः तस्य रघोरनीकैः सैन्यैः ( करणभूतैः ) रामास्त्रोत्सारितो जामदग्न्यायुधपरिसारितोऽपि अर्णवः समुद्रः सह्यलग्न इव बद्धसेतुरिव ( अथवाऽपरसमुद्रयुक्त इव ) आसीत् बभूव। रघुसैन्यमपरसमुद्र इव जनैरदृश्यतेति भावः।

( समासः ) अपरान्तानां जयोऽपरान्तजयस्तत्रोद्यता अपरान्तज-योद्यतास्तैः। रामस्याऽस्त्रं रामास्त्रं तेनोत्सारितो रामास्त्रोत्सारितः। स-ह्यं लग्नं यस्य सः॥ ५३॥

*भयोत्सृष्टेति* तेन रघुणा भयोत्सृष्टविभूषाणां साध्वसपरिहृता-लङ्करणानां केरलयोषितां केरलाङ्गनानाम् अलकेषु चूर्णकुन्तलेषु चमू-रेणवः सैन्यधूलयः चूर्णप्रतिनिधीकृतः कुङ्कुमादिपरागस्थानापन्नीकृतः। रघुसैन्यावलोकनसाध्वसेन पलायितानां केरलस्त्रीणां तत्सैनिका अनु धावनं चक्रुरिति भावः।

( समासः ) भयेनोत्सृष्टानि विभूषाणि याभिस्ताः भयोत्सृष्टविभूषा-स्तासाम्। केरलानां योषितः केरलयोषितस्तासाम्। चमूनां रेणुश्चमूरे-णुः। चूर्णस्य प्रतिनिधीकृतः चूर्णप्रतिनिधीकृतः॥ ५४॥

*मुरलेति* मुरलामारुतोद्धूतं केरलदेशीयतन्नामनदीवायूत्थापितं कैतकं केतकीसम्बन्धि रजो धूलिः तद्योधवारवाणानां रघुसैन्यकञ्चुकानाम् अयत्नपटवासताम् अप्रयाससिद्धवद्धवस्त्रवासनाद्रव्यत्वमगमत् प्राप। सुगमोऽर्थः।

( समासः ) मुरलाया मारुतो मुरलामारुतस्तेनोद्धूतं मुरलामारुतोद्धूतम्। केतक्या इदं कैतकम्। तेषां योधास्तद्योधास्तेषां वारवाणास्तद्योधवारवाणास्तेषाम्। न यत्नोयस्मिन् सोऽयत्नः स चासौ पटोऽयत्नपटस्तस्य वासोऽयत्नपटवासस्तस्य भावोऽयत्नपटवासता ताम् ॥ ५५ ॥

* अभ्यभूयतेति * चरतां गच्छतां वाहानां वाजिनामश्वानां गात्रशिञ्जितैः शरीरशब्दायमानैः वर्मभिः कवचैः पर्वतोद्धूतराजतालीवनध्वनिः वायुकम्पिततालीवनशब्दोऽभ्यभूयत तिरस्कृतः। रघुसैन्याश्वकवचमर्मरशब्दै र्वायुकम्पिततालीवनशब्दोऽभिभूत इत्यर्थः।

( समासः ) गात्रेषु शिञ्जितानि गात्रशिञ्जितानि तैः। पवनेनोद्धूतानि पवनोद्धूतानि पवनोद्धूतानि च तानि राजतालीवनानि पवनेनोद्धूतराजतालीवनानि तेषां ध्वनिः पवनोद्धूतराजतालीवनध्वनिः ॥५६॥

* खर्जूरीति* खर्जूरीस्कन्धनद्धानां तृणद्रुमविशेषप्रकाण्डबद्धानां करिणां हस्तिनां मदोद्गारसुगन्धिषु मदस्रावसुरभिषु कटेषु गण्डेषु पुन्नागेभ्यो नागकेसरेभ्यः शिलीमुखा भ्रमराः पेतुराजग्मुः। रघुकरिगण्डानां मदस्रावेण सौगन्ध्यातिशयात्पुन्नागपुष्पतरुम्परित्यज्य तत्र पेतुरिति भावः।

( समासः ) खर्जूरीणां स्कन्धः खर्जूरीस्कन्धस्तत्र नद्धाः खर्जूरीस्कन्धनद्धास्तेषाम्। मदस्योद्गारो मदोद्गारस्तेन सुगन्धयो मदोद्गारसुगन्धयस्तेषु ॥ ५७ ॥

*अवकाशमिति* उदन्वान् समुद्रोऽभ्यर्थितो याचितः सन् रामाय जामदग्न्याय अवकाशं स्थानं ददौ दत्तवान् किल रघवे दिलीपसूनवे तु अपरान्तमहीपालव्याजेन पाश्चात्यनृपतिच्छद्मना बलिं करं ददौ दत्तवान्। वामदग्न्यतोऽपि रघोरतिवीर्यवत्त्वात्समुद्रोऽप्यस्माद्बिभेतीति भावः।

( समासः ) अपरान्ताश्च ते महीपाला अपरान्तमहीपालास्ते एव व्याजोऽपरान्तमहीपालव्याजस्तेन ॥ ५८ ॥

*मत्तेभेति* तत्र स रघुः मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम्। उन्मत्तकरिदन्तक्षतस्फुटपराक्रमचिन्हं त्रिकूटमेव तन्नामकपर्वतमेव उ-

श्चैरुन्नतं जयस्तम्भं विजयसूचकस्थूणं चकार विदधौ। त्रिकूटाचल एव रघोर्जयस्तम्भोऽभूदित्यर्थः।

( समासः ) मत्ताश्च ते इभा मत्तेभास्तेषां रदनानि मत्तेभरदनानि तैरुत्कीर्णानि अत एव व्यक्तानि विक्रमलक्षणानि यस्मिन् स मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणस्तम्। जयस्य स्तम्भो जयस्तम्भस्तम् ॥५९॥

*पारसीकानिति* ततस्तदनन्तरं स रघुः योगी कृतयोगाभ्यासः तत्त्वज्ञानेन परमार्थबोधेन इन्द्रियाख्यान् इन्द्रियनामकान् रिपून् शत्रून् इव पारसीकान् पारसीकदेशनृपतीन् जेतुं पराभावयितुं स्थलवर्त्मना स्थलमार्गेण प्रतस्थे जगाम। समुद्रयानस्य निषिद्धत्वान्निर्दिष्टजलपथेन न जगाम रघुः किन्तु स्थलमार्गेणैवेत्यर्थः।

( समासः ) इन्द्रियमित्याख्या येषां ते इन्द्रियाख्यास्तान्। तत्त्वस्य ज्ञानं तत्त्वज्ञानं तेन। संयमोऽस्त्यस्येति संयमी ॥ ६० ॥

*यवनीमुखेति* स रघुः यवनीमुखपद्मानां यवनाङ्गनाऽऽस्यकमलानां मधुमदं मद्यमदरागम् अकालजलदोदयः आकालिकमेघागमोऽब्जानां पद्मानां बालातपं स्वल्पसौरातपमिव न सेहे न सोढवान्। यथाऽऽकालिको मेघः कमलसम्बन्धिस्वल्पसौरातपं न सहते तथा रघुरपि यवनीमुखकमलसम्बन्धिमद्यमदरागं न सोढवानित्यर्थः।

( समासः ) यवनीनां मुखानि यवनीमुखानि तानि पद्मानीव यवनीमुखपद्मानि तेषाम्। मधुनो मदो मधुमदस्तम्। बालश्चासावातपो बालातपस्तम्। जलदस्योदयो जलदोदयोऽकाले जलदोदयोऽकालजलदोदयः ॥ ६१ ॥

*सङ्ग्राम इति* तस्य रघोः अश्वसाधनैः वाजिसैन्यैः पाश्चात्यैः पारसीकैः यवनैः (सह) शार्ङ्गकूजितविज्ञेयप्रतियोधे धनुश्शब्दानुमेयप्रतिभटे रजसि परागे तुमुलः सङ्कुलः संग्रामो युद्धम् अभुन् जातः। रघोर्यवनैः सह तुमुलं युद्धमभूदित्यर्थः।

( समासः ) पश्चाद्भवाः पाश्चात्यास्तैः। अश्वाः साधनानि येषां तेऽश्वसाधनास्तैः। शार्ङ्गस्य कूजितं शार्ङ्गकूजितं तेन विज्ञेयाः प्रतियोधा यस्मिन् तत शार्ङ्गकूजितविज्ञेयप्रतियोधं तस्मिन् ॥ ६२ ॥

*भल्लेति* स रघुः भल्लापवर्जितैः बाणविशेषकृत्तैः श्मश्रुलैः श्मश्रुव्याप्तैः तेषां पाश्चात्यानां शिरोभिः मस्तकैः सरघाव्याप्तैः मधुमक्षिकाऽऽक्रान्तैः क्षौद्रपटलैः मधुसञ्चयैरिव महीं पृथिवीं तस्तार आच्छादयामास। रघुः भल्ल (भाला) छिन्नयवनशिरोभिर्महीमाच्छादयामासेत्यर्थः।

( समासः ) भल्लैरपवर्जिता भल्लापवर्जितास्तैः । श्मश्रुभि र्युक्तानि श्मश्रुलानि तैः । सरघाभिर्व्याप्ताः सरघाव्याप्तास्तैः । क्षुद्राभिः कृतानि क्षौद्राणि तेषां पटलाः क्षौद्रपटलास्तैः ॥ ६३ ॥

*अपनीतेति* शेषा हतावशिष्टा अपनीतशिरस्त्राणाः अपसारितशीर्षण्याः सन्तः तं रघु शरणं रक्षकं ययुः प्रापुः । हि यतो महात्मनां महतां संरम्भः कोपः प्रणिपातप्रतीकारः प्रणतिनिवृत्त्युपायो भवतीति शेषः । हतावशिष्टाः पारसीकाः क्रुद्धस्य रघोः प्रसादाय प्रणतिं व्यधुरित्यर्थः ।

( समासः ) अपनीतं शिरस्त्राणं यैस्तेऽपनीतशिरस्त्राणाः । प्रणिपात एव प्रतीकारो यस्य सः ॥ ६४ ॥

*विनयन्तेस्मेति* तस्य रघो र्योधा भटा आस्तीर्णाजिनरत्नासु विस्तृतचर्मश्रेष्ठासु द्राक्षावलयभूमिषु मृद्वीकावलयप्रदेशेषु मधुभि र्द्राक्षाफलजन्यमद्यैः विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः । रघुसैनिकाः पारसीकाधिपं विजित्य तत्र द्राक्षाफलमद्यम्पीत्वा युद्धश्रमं दूरी कुर्वन्तिस्मेत्यर्थः ।

( समासः ) तस्य योधास्तद्योधाः । विजये विजयस्य–विजयायवा· श्रमो विजयश्रमस्तम् । आस्तीर्णानि अजिनरत्नानि यासु ता आस्तीर्णाजिनरत्नास्तासु । द्राक्षावलयानां भूमयो द्राक्षावलयभूमयस्तासु ॥ ६५ ॥

*तत इति* ततस्तदनन्तरं रघु र्दिलीपसूनुः भास्वान् सूर्य इव शरै र्बाणैः उस्रैः किरणैरिव उदीच्यान् उत्तरदिग्भवान् नृपान् रसान् उदकानि इव उद्धरिष्यन् उद्धारं करिष्यन् कौवेरीं कुवेरसम्बन्धिनीं दिशम उत्तरां दिशं प्रतस्थे जगाम । अनन्तरं रघुः प्राचीं दिशं विजित्योत्तरां दिशं विजेतुं जगामेत्यर्थः ॥ ६६ ॥

*विनीतेति* सिन्धुतीरविचेष्टनैः काश्मीरदेशीयनदविशेषतटाङ्गपरिवर्तनैः विनीताध्वश्रमा अपनीतमार्गखेदास्तस्य रघो र्वाजिनोऽश्वाः लग्नकुङ्कुमकेसरान् सम्बद्धकुङ्कुमकुसुमकिञ्जल्कान् स्कन्धान् कायान् दुधुवुः चकम्पिरे । रघोरश्वाः सिन्धुतटेऽङ्गपरिवर्तनेन मार्गश्रममपनीय कायान् कम्पयन्तिस्मेत्यर्थः ।

( समासः ) विनीतोऽध्वश्रमो यैस्ते । सिन्धोस्तीरं सिन्धुतीरं तत्र विचेष्टनानि सिन्धुतीरविचेष्टनानि तैः । लग्नाः कुङ्कुमकेसरा येषां ते लग्नकुङ्कुमकेसरास्तान् ॥ ६७ ॥

*तत्रेति* तत्र उदीच्यां दिशि भर्तृषु स्वामिषु व्यक्तविक्रमं स्फुट·

पराक्रमं (भर्तृबधेन स्फुटपराक्रममित्यर्थः) रघुचेष्टितं रघुव्यापारः हूणावरोधानां हूणजनपदक्षत्रियान्तःपुरस्त्रीणाम् कपोलपाटलादेशि बभूव । रघुणा हूणदेशीयक्षत्रियेषु हतेषु तेषां स्त्रियः स्वामिनोऽनुशोचन्त्यः कपोलताडनपूर्वकं रुरुदुस्तेन कपोलेष्वारुण्यं बभूवेत्यर्थः ।

( समासः ) हूणानामवरोधा हूणावरोधास्तासाम् । व्यक्तो विक्रमो येन स व्यक्तविक्रमस्तम् । कपोलेषु पाटलं कपोलपाटलं तदादिशति तच्छीलं कपोलपाटलादेशि । रघोश्चेष्टितं रघुचेष्टितम् ॥ ६८ ॥

*काम्बोजा इति* काम्बोजा कम्बोजदेशाधिपाः ( राजानः ) समरे सङ्ग्रामे तस्य रघोः वीर्यं प्रभावं सोढुं मर्षितुम् अनीश्वरा असमर्थाः सन्तः गजालानपरिक्लिष्टैः करिबन्धनपरिक्षतैः अक्षोटैः (अखरोट) इति प्रसिद्धवृक्षैः सार्धं सह आनताः पतिताः । यथा करिबन्धनपरिक्षता अक्षोटवृक्षाः पतितास्तथा काम्बोजा अपि पतिता इत्यर्थः ।

( विग्रहसमासौ ) कम्बोजानामधिपाः काम्बोजाः । ईशत इतीश्वरा न ईश्वरा अनीश्वराः । गजानामालानं गजालानं तेन परिक्लिष्टा गजालानपरिक्लिष्टास्तैः ॥ ६९ ॥

*तेषामिति* तेषां काम्बोजानां सदश्वभूयिष्ठाः साधुतुरङ्गबहुलाः तुङ्गा उन्नता द्रविणराशयो हिरण्यसञ्चया उपदा उपायनानि कोसलेश्वरं कोशलाधिपं रघुं शश्वत् असकृत् विविशुः उत्सेकाः सगर्वा न विविशुः । काम्बोजा अश्वयुताहिरण्यराशिमुपायनं रघवे ददुरित्यर्थः ।

( समासः ) सन्तश्च तेऽश्वाः सदश्वास्तैर्भूयिष्ठाः सदश्वभूयिष्ठाः द्रविणानां राशयो द्रविणराशयः । कोशलस्येश्वरः कोशलेश्वरस्तम् ॥७०॥

* तत इति * ततस्तदनन्तरम् ( रघुः )अश्वसाधनो वाजिसहायः सन् गौरीगुरुं पार्वतीपितरं शैलं गिरिं ( हिमवन्तम् ) उद्धतैरश्वखुरोत्थापितैः धातुरेणुभिः गैरिकादिपरागैः तत्कूटान् हिमालयशृङ्गाणि वर्द्धयन् एधयन् इव आरूढवान् । अश्वखुरोद्धुतधातुपरागदर्शनाद्धिमालयशिखरवृद्धिभ्रमो जात इति भावः ।

( समासः ) गौर्या गुरुर्गौरी गुरुस्ताम् । अश्वः साधनं यस्य सः । तस्य कूटास्तत्कूटास्तान् । धातूनां रेणवो धातुरेणवस्तैः ॥ ७१ ॥

*शशंसेति* तुल्यसत्वानां समानबलानां गुहाशयानां दरीसुप्तानां सिंहानां केसरिणां ( सम्बन्धि ) परिवृत्त्यावलोकितं सुप्त्वैव ग्रीवाभङ्गपूर्वकावलोकनं (कर्तृ) सैन्यघोषे सेनाकलकलेऽपि असम्भ्रमम् अन्तः क्षोभरहितं ( सैन्येभ्यः ) शशंस कथयामास ॥ तुल्यबलात्तुल्यबलानां

भयाभावस्य लोकप्रसिद्धतया सिंहानां रघुसमबलत्वाज्जातस्तेषां भीतिरिति भावः।

( समासः ) तुल्यं सत्त्वं येषां ते तुल्यसत्वास्तेषाम्। सैन्यानां घोषः सैन्यघोषस्तस्मिन्। न सम्भ्रमोऽसम्भ्रमस्तम्। गुहासु शेरत इति गुहाशयास्तेषाम्॥ ७२॥

*भूर्जेष्विति* भूर्जेषु भूर्जपत्रेषु मर्मरीभूता मर्मरशब्दवन्तः कीचकध्वनिहेतवो वेणुविशेषशब्दकारणभूताः ( श्रोत्रसुखजनकाश्च ) गङ्गाशीकरिणः सुरसरित्कणाशालिनो मरुतो वायवो मार्गे पथि तं रघुं सिषेविरे भेजिरे। विजयार्थं गच्छतो मार्गश्रान्तस्य रघोः वायवोऽपि सेवां चक्रुरित्यर्थः।

( समासः ) न मर्मरा अमर्मरा अमर्मरा मर्मराः सम्पन्ना मर्मरीभूताः। कीचकानां ध्वनिः कीचकध्वनिस्तस्य हेतवः कीचकध्वनिहेतवः। गङ्गायाः शीकरा गङ्गाशीकरास्ते सन्त्येषां ते गङ्गाशीकरिणः ७३

*विशश्रमुरिति* सैनिकाः सैन्या नमेरूणां सुरपुन्नागानां छायासु निषण्णमृगनाभिभिरुपविष्टकस्तूरीमृगनाभिभि र्वासितोत्सङ्गाः सुरभितं तला दृषदः प्रस्तरा अध्यास्य अधिष्ठाय विशश्रमुः विगतश्रमा बभूवुः। रघुसैनिकाः सुरभितशिलासूपविश्य मार्गश्रान्तिमपनोदयामासुरित्यर्थः।

( समासः ) वासिते उत्सङ्गा येषां ते वासितोत्सङ्गाः। निषण्णाश्च ते मृगा निषण्णमृगास्तेषां नाभयो निषण्णमृगनाभयस्तैः॥ ७४॥

*सरलेति* सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषो देवदारुविशेषबद्धकरिकण्ठशृङ्खलाप्रतिफलितभासः ओषधयो ज्वलन्तो ज्योतिर्लताविशेषा नक्तं रात्रौ नेतुर्नायकस्य रघोः अस्नेहदीपिकाः तैलनिरपेक्षाः प्रदीपा आसन् बभूवुः। तत्र हिमालयपर्वते रघोरोषधय एव रात्रौ दीपकार्यं सम्पादयामासुरित्यर्थः।

( समासः ) सरलेषु आसक्ताः सरलासक्तास्ते च ते मातङ्गाः सरलासक्तमातङ्गास्तेषां ग्रैवेयाणि सरलासक्तमातङ्गग्रैवेयाणि तेभ्यः स्फुरिता त्विट् यासां ताः। न विद्यते स्नेहो यस्यां साऽस्नेहास्ताश्च ता दीपिका अस्नेहदीदिकाः॥ ७५॥

*तस्येति* तस्य रघोः उत्सृष्टनिदासेषु उज्झितसेनानिवेशेषु कण्ठरज्जुक्षतत्वचः करिग्रैवनिष्पिष्टत्वचो देवदारवो देवदारुवृक्षाः किरा-

तेभ्यो वनचरेभ्यो गजवर्ष्म करिदेहप्रमाणं शशंसुः कथयामासुः । देवदारव एव करिदेहप्रमाणं किरातेभ्यो निवेदयामासुरित्यर्थः ।

( समासः ) उत्सृष्टो निवासो यैस्ते उत्सृष्टनिवासास्तेषु । कण्ठस्य रज्जुः कण्ठरज्जुस्तया क्षता त्वक् येषां ते । गजस्य वर्ष्म गजवर्ष्म ॥७६॥

*तत्रेति* तत्र हिमाद्रौ रघोः पर्वतीयैः पर्वतान्द्भवैर्गणैः सैन्यैः (सह) नाराचक्षेपणीयाश्मनिष्पेषोत्पतितानलं बाणविशेष-भिन्दिपाल-पाषाणसंघर्षोत्पन्नपावकं घोरं भयानकं जन्यं युद्धमभूत् । तत्र रघोः पर्वतीयसैन्यैः सह सङ्ग्रामे बाणसङ्घर्षेण भिन्दिपालसङ्घर्षेण पाषाणसङ्घर्षेण वह्निरुत्पन्नो बभूवेत्यर्थः ।

( समासः ) पर्वते भवाः पर्वतीयास्तैः । नाराचाश्च क्षेपणीयाश्च अश्मानश्च नाराचक्षेपणीयाश्मानस्तेषां निष्पेषो नाराचक्षेपणीयाश्मनिष्पेषस्तेनोत्पतितोऽनलो यस्मिन् तत् ॥ ७७ ॥

*शरैरिति*स रघुः शरै र्बाणैरुत्सवसङ्केतान् तन्नामगणान् विरतोत्सवान् उत्साहरहितान् कृत्वा विधाय किन्नरान् देवगणविशेषान् बाह्वोर्भुजयो र्जयोदाहरणं जयसूचकप्रबन्धविशेषं गापयामास । रघु र्बाणद्वारोत्सवसङ्केतादिगणान्विजित्य किन्नरद्वारा स्वभुजसामर्थ्यप्रशंसां कारयामासेत्यर्थः ।

( समासः ) विरत उत्सवो येषां ते विरतोत्सवास्तान् । जयस्योदाहरणं जयोदाहरणम् ॥ ७८ ॥

*परस्परेणेति* तेषु उत्सवसङ्केतादिगणेषु उपायनपाणिषु उपहारकरेषु सत्सु परस्परेण अन्योऽन्येन राज्ञा रघुणा हिमवतः पर्वतराजस्य सारो धनरूपो विज्ञातः हिमाद्रिणाऽपि राज्ञो रघोः सारो बलरूपो विज्ञातः । विजितेषूत्सवसङ्केतादिगणेषु रघुणा हिमालयधनं विज्ञातं हिमालयेन च रघुसामर्थ्यं विज्ञातमित्यर्थः ।

( समासः ) उपायनानि पाणिषु येषां ते उपायनपाणयस्तेषु ॥७९॥

*तत्रेति* स रघुस्तत्र हिमाद्रौ अक्षोभ्यम् अधृष्यं यशोराशिं कीर्त्तिसमूहं निवेश्य निधाय पौलस्त्यतुलितस्याद्रेः रावणचालितपर्वतस्य ( कैलाशस्य ) ह्रियं लज्जामादधानो जनयन् इव अवरुरोह अवततार । शूराणामन्यपराजिताभियोगस्याऽप्रसिद्धतया कैलासमगत्वैव प्रतिनिवृत्तो रघुरिति भावः ।

( समासः ) न क्षोभ्यमक्षोभ्यम् । यशसां राशिर्यशोराशिस्तम् । पौलस्त्येन तुलितः पौलस्त्यतुलितस्तस्य ॥ ८० ॥

*चकम्प इति* तस्मिन् रघौ तीर्णलौहित्ये लौहित्यनामनदीपारं गते सति प्राग्ज्योतिषेश्वरस्तन्नामजनपदाधिपः तद्गजालानतां रघुकरिपृ-

द्धास्तरणतां प्राप्ते गतैः कालागुरुद्रुमैः कृष्णागुरुवृक्षैः सह चकम्पे कम्पितवान्। प्राग्ज्योतिषेश्वरो रघु दृष्ट्वैव कम्पितवानित्यर्थः।

( समासः ) तीर्णा लौहित्या येन स तीर्णलौहित्यस्तस्मिन्। प्राग्ज्योतिषाणामीश्वरः प्राग्ज्योतिषेश्वरः। तस्य गजास्तद्गजास्तेषामालानं तद्गजालानं तस्य भावस्तद्गजालानता ताम्। कालाश्च तेऽगुरुद्रुमाः कालागुरुद्रुमास्तैः ॥ ८१ ॥

*नेति* स प्राग्ज्योतिषेश्वरः रुद्धार्कम् आवृतसूर्यम् अधारावर्षदुर्दिनम् धारावृष्टिमन्तरैव दुर्दिनीभूतम् अस्य रघो रथवर्त्मरजः स्यन्दनमार्गधूलिमपि न प्रसेहे न सोढवान् पताकिनीं सेनां तु कुत एव प्रसेहे न कुतोऽपि। प्राग्ज्योतिषनामजनपदाधिपा रघुरथमार्गोत्थधूलिभिरेवाऽऽकुलो बभूव किमु तत्सेनाभिरिति भावः।

( समासः ) रुद्धोऽर्को येन तत्। धाराणां वर्षं धारावर्षं न धारावर्षमधारावर्षं तेन दुर्दिनमधारावर्षदुर्दिनम्। रथस्य वर्त्म रथवर्त्म तस्य रजो रथवर्त्मरजः। पताकाऽस्त्यस्याः पताकिनी ताम् ॥ ८२ ॥

*तमिति* कामरूपाणां तदाख्यजनपदानामीशोऽधिपः अत्याखण्डलविक्रमम् अतीन्द्रपराक्रमं तं रघुं यैः गजैरन्यान् रघुव्यतिरिक्तान् नृपान् उपरुरोध ( तैः ) भिन्नकटैः स्रवन्मदैः नागैः गजैः भेजे सेवितवान्। कामरूपेश्वरोऽतिशूरान् गजान् दत्वा शूराऽतिशूरस्य रघोः शरणं गत इत्यर्थः।

( समासः ) आखण्डलस्य विक्रम आखण्डलविक्रमस्तमतिक्रान्तोऽत्याखण्डलविक्रमस्तम्। भिन्नाः कटा येषां ते भिन्नकटास्तैः ॥ ८३ ॥

*कामरूपेति* कामरूपेश्वरस्तदाख्यजनपदाधिपो हेमपीठाधिदेवतां सिंहासनाधीश्वरीं तस्य रघोः पादयोश्चरणयोश्छायां हेमपीठव्यापिनीं कान्तिं रत्नपुष्पोपहारेण रत्नरूपकुसुमसमर्पणेन आनर्च पूजयामास। कामरूपाधिपो हेमपीठे (सिंहासने) समुपवेशितस्य रघोश्चरणच्छायां पूजयामासेत्यर्थः।

( समासः ) कामरूपस्येश्वरः कामरूपेश्वरः। हेम्नः पीठो हेमपीठस्तस्याऽधिदेवता हेमपीठाधिदेवता ताम्। रत्नान्येव पुष्पाणि रत्नपुष्पाणि तेषामुपहारो रत्नपुष्पोपहारस्तेन ॥ ८४ ॥

*इतीति* जिष्णु जयशीलो रघुः इत्युक्तरीत्या दिश आशा जित्वा स्वायत्तीकृत्य रथोद्धतं स्यन्दनोत्थितं रजो धूलिं छत्रशून्येषु आतपत्ररहितेषु राज्ञां नृपतीनां मौलिषु कीरीटेषु विश्रामयन् संक्रामयन् न्यवर्तत निवृत्तः। रघुः सर्वा दिशो विजित्य स्वराजधानीमागत इत्यर्थः।

( समासः ) जयति तच्छीलो जिष्णुः। रथेनोद्धतं रथोद्धतम्। छ-

त्रैः शून्याश्छत्रशून्यास्तेषु ॥ ८५ ॥

*स इति* स रघुः सर्वस्वदक्षिणं सकलधनदेयं विश्वजितं नाम यज्ञं सत्रम् आजह्रे आरब्धवान् हि यतः सतां साधूनां वारिमुचां मेघानामिव आदानम् अर्जनं त्यागाय सत्पात्रविनियोगाय भवतीति शेषः । यथा मेघैः परोपकाराय ( वर्षणाय ) समुद्राज्जलं गृह्यते तथा रघुणाऽपि देव–ब्राह्मणेभ्यः समर्पणाय बहुलधनमर्जितमित्यर्थः ।

( समासः ) सर्वस्वं दक्षिणा यस्य स सर्वस्वदक्षिणस्तम् । वारि मुञ्चन्तीति वारिमुचस्तेषाम् ॥ ८६ ॥

*सत्रान्ते इति* काकुत्स्थो रघुः सत्रान्ते यज्ञावसाने सचिवसखोऽमात्यसहायः सन् गुर्वीभि र्महतीभिः पुरस्क्रियाभिः पूजाभिः शमितपराजयव्यलीकान् दूरीकृतपराभवदुःखा (वैलक्ष्या)न् चिरविरहोत्सुकावरोधान् बहुकालिकवियोगोत्कण्ठितान्तःपुराङ्गनान् राजन्यान् क्षत्रियान् स्वपुरनिवृत्तये निजनगरप्रतिगमनाय अनुमेने अनुज्ञातवान् । रघु र्येषे सर्वान् पराजितान् राज्ञ आनाय्य तेषां विशिष्टसत्कारद्वारा पराजयजन्यदुःखं दूरीकृत्य तान् स्वपुरगमनायाऽऽज्ञापयामासेत्यर्थः ।

( समासः ) सत्रस्यान्तः सत्रान्तस्तस्मिन् । सचिवानां सखा सचिवसखः । शमितं पराजयेन व्यलीकं येषां ते शमितपराजयव्यलीकास्तान् । चिरविरहेणोत्सुका अवरोधा येषां ते चिरविरहोत्सुकावरोधास्तान् । राज्ञोऽपत्यानि राजन्यास्तान् । स्वस्य पुरं स्वपुरं तम्प्रति निवृत्तिः स्वपुरनिवृत्तिस्तस्यै ॥ ८७ ॥

*त इति* ते राजानो रेखाध्वजकुलिशातपत्रचिन्हं ध्वजाद्याकाररेखालक्षणं प्रसादलभ्यं प्रसन्नताप्राप्यं सम्राजः सार्वभौमस्य (रघोः) चरणयुगं पादद्वन्द्वं प्रस्थानप्रणतिभिः प्रयाणकालिकनमस्कारैः (करणैः) अङ्गुलीषु मौलिस्रक्च्युतमकरन्दरेणुगौरम् केशबन्धमाल्यपतितपुष्परसपरागगौरवर्णं चक्रु र्विदधिरे । ते राजानः प्रस्थानकाले रघुचरणं प्रणेमुरिति भावः ।

( समासः ) रेखा एव ध्वजाः कुलिशानि आतपत्राणि चेति रेखाध्वजकुलिशातपत्राणि तान्येव चिन्हानि यस्य तत् । प्रसादेन लभ्यं प्रसादलभ्यम् । सम्यक् राजते शोभते इति सम्राट् तस्य । चरणयो र्युगं चरणयुगम् । प्रस्थाने प्रणतयः प्रस्थानप्रणतयस्ताभिः । मौलिषु स्रजो मौलिस्रजस्ताभ्यश्च्युता मौलिस्रक्च्युताः ते च ते मकरन्दाः मौलिस्रक् च्युतमकरन्दास्तेषां रेणवो मौलिस्रक्च्युतमकरन्दरेणवस्तैर्गौरं मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८ ॥

इति रघुवंशस्यार्थप्रकाशिकायां चतुर्थः सर्गः ।

# अथ पञ्चमः सर्गः ।

*तमिति* विश्वजिति विश्वजिन्नाम्नि अध्वरे यज्ञे निश्शेषविश्राणितकोषजातम् सकलदत्तार्थराशिसमूहं तं क्षितीशं राजानम् (रघुम्) उपात्तविद्यः लब्धशास्त्रो वरतन्तुशिष्यो वरतन्तोरन्तेवासी कौत्सः तन्नामको मुनिः गुरुदक्षिणार्थी उपाध्यायविद्याग्रहणमूल्यप्रयोजनः सन् प्रपेदे प्राप । यज्ञे सर्वस्वे व्ययीभूते सति वरतन्तुशिष्यः कौत्सो गुरुदक्षिणाप्रयोजनः सन् आजगामेत्यर्थः ।

( समासः ) विश्वं जयतीति विश्वजित् तस्मिन् । क्षितेरीशः क्षितीशस्तम् । कोषानां जातं कोषजातं निश्शेषं विश्राणितं कोषजातं येन स निश्शेषविश्राणितकोषजातस्तम् । उपात्ता विद्या येन सः । गुरोर्दक्षिणा गुरुदक्षिणा साऽर्थोऽस्यास्तीति गुरुदक्षिणार्थी । वरतन्तोः शिष्यो वरतन्तुशिष्यः ॥ १ ॥

*स इति* अनर्घशीलोऽमूल्यस्वभावः ( असाधारणस्वभावः ) यशसा कीर्त्या प्रकाशः प्रसिद्धः आतिथेयः अतिथिसत्कारनिपुणः स रघुः वीतहिरण्मयत्वात् अपगतसुवर्णपात्रत्वात् ( हेतोः ) मृन्मये मृद्विकारे पात्रे भाजने अर्घ्यं पूजार्थद्रव्यं (जलादि) निधाय संस्थाप्य श्रुतप्रकाशं शास्त्रप्रसिद्धम् (अभ्यस्तवेदशास्त्रम्) अतिथिम् अभ्यागतम् ( कौत्सम् ) प्रत्युज्जगाम प्राप । विश्वजिन्नाम्नि यज्ञे सर्वस्वे व्ययीभूते सति सुवर्णपात्राभावान्मृत्पात्रे जलं निधाय रघुः कौत्सान्तिकमाजगामेत्यर्थः ।

( समासः ) मृतो विकारो मृन्मयं तस्मिन् । हिरण्यस्य विकारो हिरण्मयं वीतं हिरण्मयं यस्य स वीतहिरण्मयस्तस्य भावो वीतहिरण्मयत्वं तस्मात् । अर्घार्थमिदमर्घ्यम् । अनर्घं शीलं यस्य सः । श्रुतेन प्रकाशः श्रुतप्रकाशस्तम् । प्रकाशत इति प्रकाशः । अतिथिषु साधुरातिथेयः ॥ २ ॥

*तमिति* विधिज्ञः शास्त्रज्ञः ( अकरणे प्रत्यवायभीरुः ) मानधनाग्रयायी मानवदग्रेसरः ( अपयशोभीरुः ) कृत्यवित् कार्यज्ञः विशाम्पति नृपतिः ( रघुः ) विष्टरभाजम् आसनोपविष्टं तपोधनं तपस्विनं तं कौत्सं विधिवत् यथाशास्त्रम् अर्चयित्वा सम्पूज्य कृताञ्जलि मुकुलीकृतहस्तः सन् इति वक्ष्यमाणप्रकारेण उवाच जगाद । कौत्समुनिं विधिवत्पूजयित्वा वक्ष्यमाणवचनमुवाचेत्यर्थः ।

( विग्रह-समासौ ) विधिना तुल्यं विधिवत् । विधिं जानातीति विधिज्ञः । तपांस्येव धनानि यस्य स तपोधनस्तम् । मानं धनं येषां ते मानधनास्तेषामग्रयायी मानधनाग्रयायी । विष्टरं भजतीति विष्टरभाक् तम । कृतोऽञ्जलि र्येन सः । कृत्यं वेत्तीति कृत्यवित् ॥ ३ ॥

*अप्यग्रणीरिति* हे कुशाग्रबुद्धे सूक्ष्मप्रज्ञ ! मन्त्रकृतां मन्त्रद्रष्टॄणाम् ऋषीणां मुनीनाम् अग्रणीः श्रेष्ठः ते तव गुरुरुपाध्यायः (वरतन्तुः) कुशली अपि क्षेमवान् किम् ( अपिरत्र प्रश्ने ) यतो यस्माद्गुरोः सकाशाद् त्वया अशेषं सकलं ज्ञानं बुद्धिः लोकेन जनेन उष्णरश्मेः सूर्यात् चैतन्यं प्रबोध इव आप्तं स्वीकृतम । यथा लोकाः सूर्याच्चैतन्यमुपाप्नुवन्ति तथा त्वं सकलज्ञानं यस्माद्गुरोः सकाशात्प्राप्तवान् स तव गुरुः कुशलयुक्तोऽस्ति किमित्यर्थः ।

( समासः ) अग्रं नयतीति अग्रणीः । मन्त्रं कुर्वन्तीति मन्त्रकृतस्तेषाम् । कुशानामग्रं कुशाग्रं तद्वद्बुद्धिर्यस्य स कुशाग्रबुद्धिस्तत्सम्बुद्धौ । कुशलमस्यास्तीति कुशली । न विद्यते शेषो यस्य तत् अशेषम् । चेतनस्य भावश्चैतन्यम् । उष्णो रश्मिर्यस्य स उष्णरश्मिः ॥ ४ ॥

*कायेनेति* कायेन उपवासादिकृच्छ्रचान्द्रायणादिना वाचा वेदपाठेन मनसा गायत्रीजपादिना ( करणेन ) वासवधैर्यलोपि इन्द्रगाम्भीर्यापहारि यत् तपः शश्वत् संभृतं सञ्चितं, महर्षे र्वरतन्तोः त्रिविधं काय-वाङ्-मनोजन्यं तत् तपः अन्तरायै र्विघ्नैः ( इन्द्रप्रेषिताऽप्सरः शापैः ) व्ययं नाशं न आपाद्यते कच्चित न नीयते किम् । ( किमत्र प्रश्ने ) । कायादिसञ्चितं वरतन्तुतपोऽप्सरः प्रभृतिभिर्दूषितं किमित्यर्थः ।

( समासः ) वासवस्य धैर्यं वासवधैर्यं तल्लुम्पतीति वासवधैर्यलोपि महांश्चासावृषिर्महर्षिस्तस्य । तिस्रो विधा यस्य तत ॥ ५ ॥

*आधारेति* आधारबन्धप्रमुखैः आलवालनिर्माणादिभिः प्रयत्नरूपायैः सुतनिर्विशेषं पुत्रतुल्यस्नेहेन संवर्द्धितानां पालितानां श्रमच्छिदां छायाप्रदानद्वारा सूर्यकिरणसन्तप्तपथिकश्रान्त्यपहारिणाम । वो युष्माकम् आश्रमपादपानाम् आवासस्थतरूणां वाय्वादि र्वायुप्रभृतिः उपप्लवो बाधको न कच्चित् नास्ति किम् । भवदाश्रमवृक्षाणां वाय्वादिकृतबाधो जातः किमिति भावः ।

( समासः ) आधारस्य बन्ध आधारबन्धः स प्रमुख आदिर्येषां ते आधारबन्धप्रमुखास्तैः । सुतेभ्यो निर्गतो विशेषो यस्मिन् कर्मणि तत् ( क्रियाविशेषणमिदम् ) सुतनिर्विशेषम् । वायुरादिर्यस्य सः । श्रमं छिन्दन्तीति श्रमच्छिदस्तेषाम् । आश्रमस्य पादपा आश्रमपादपास्तेषाम् ॥ ६ ॥

*क्रियेति* क्रियानिमित्तेषु अनुष्ठानसाधनेषु अपि कुशेषु दर्भेषु मुनिभिः ऋषिभिः वत्सलत्वात् मृगस्नेहात् अभग्नकामा अप्रतिहतेच्छा तदङ्कशय्याच्युतनाभिनाला मुनिक्रोडास्तरणपतितनाभिनाला मृगीणां हरिणीनां प्रसूतिः सन्ततिः अनघा अव्यसना कच्चित् । अतिस्नेहपात्रभूता मृगीप्रसूतिः कुशलिनी वर्तते किमित्यर्थः ।

( समासः ) क्रियाणां निमित्तानि क्रियानिमित्तानि तेषु । वत्सलस्य भावो वत्सलत्वं तस्मात् । अभग्नः कामो यस्याः सा । तेषामङ्कास्तदङ्कास्ते एव शय्यास्तदङ्कशय्यास्ताभ्यश्च्युतानि नाभिनालानि यस्याः सा । न अघं विद्यते यस्याः सा ॥ ७ ॥

*निर्वर्त्यत इति* यैः तीर्थजलैः नियमाभिषेको नित्यस्नानादिर्निर्वर्त्यते सम्पाद्यते येभ्यो जलेभ्यः पितृणाम् अग्निष्वात्तादीनां निवापाञ्जलयस्तर्पणाञ्जलयो निर्वर्त्यन्ते सम्पाद्यन्ते उञ्छषष्ठाङ्कितसैकतानि राजग्राह्यप्रकीर्णोद्धृतधान्यषष्ठभागचिह्नितपुलिनानि तानि वो युष्माकं तीर्थजलानि शिवानि कल्याणानि कच्चित् । युष्माकं तीर्थजलानि कुशलानि किमित्यर्थः ।

( समासः ) नियमेनाऽभिषेको नियमाऽभिषेकः । निवापस्याऽञ्जलयो निवापाञ्जलयः । उञ्छानां षष्ठा उञ्छषष्ठास्तैरङ्कितानि सैकतानि येषां तानि । तीर्थस्य जलानि तीर्थजलानि ॥ ८ ॥

*नीवारेति* कालोपपन्नातिथिकल्प्यभागं योग्यसमयागताभ्यागतरचितांशं वन्यं वनोद्भवं शरीरस्थितिसाधनं जीवितोपायं वो युष्माकं नीवारपाकादि नीवार-श्यामाकादिधान्यं जानपदैः जनपदेभ्य आगतैः कडङ्गरीयैः बुसभक्षकैः ( गोमहिषादिभिः ) न आमृग्यते कच्चित् न भक्ष्यते किम् । जनपदेभ्य आगत्य गोमहिषादयो नीवारादिधान्यं भक्षयन्ति किमित्यर्थः ।

( समासः ) नीवारस्य पाको नीवारपाकः स आदिर्यस्य तत् । कडङ्गरं बुसमर्हन्तीति कडङ्गरीयास्तैः । जनपदेभ्य आगता जानपदास्तैः । कालेषूपपन्नाः कालोपपन्नास्ते च तेऽतिथयः कालोपपन्नातिथयस्तेषां कल्प्या भागा यस्य तत् । वने भवं वन्यम् । शरीरस्य स्थितिः शरीरस्थितिस्तस्याः साधनं शरीरस्थितिसाधनम् ॥ ९ ॥

* अपीति * त्वं प्रसन्नेन हृष्टेन महर्षिणा मुनिना (वरतन्तुना) सम्यग्विनीय शिक्षयित्वा गृहाय गृहस्थाश्रमं प्रवेष्टुम् अनुमतोऽनुज्ञातः किम् । हि यस्मात्ते तव सर्वोपकारक्षमं ब्रह्मचर्याद्युपकारशक्तं द्वितीयम्

आश्रमं गार्हस्थ्यं संक्रमितुं प्राप्तुम् अयमेष कालः समयः (प्राप्तोऽस्तीति शेषः) । महर्षिः ( वरतन्तुः ) त्वां सकलशास्त्रोपदेशं विधाय गृहस्थाश्रममङ्गीकर्तुं प्रेषितवान् किमित्यर्थः ।

( समासः ) महान् चासावृषिर्महर्षिस्तेन । सर्वेषामुपकारः सर्वोपकारस्तत्र क्षमः सर्वोपकारक्षमस्तम् ॥ १० ॥

* तवेति * अर्हतः पूज्यस्य अभिगमनेन आगमनमात्रेण मे मम मनश्चित्तं न तृप्तं न सन्तुष्टं किन्तु नियोगक्रियया आज्ञाकरणेन उत्सुकं सोत्कण्ठम् शास्तु गुरोः आज्ञया अनुमत्या आत्मना स्वतो वा मां सम्भावयितुं शुभाशीर्वादादिना प्रसन्नीकर्तुं ( वर्द्धयितुं ) वनादरण्यात्प्राप्त आगतोऽसि । भवतामिहागमनं गुर्वर्थं स्वार्थं वेति मां बोधयेत्यर्थः ।

( समासः ) नियोगस्य क्रिया नियोगक्रिया तया ॥ ११ ॥

* इत्यर्घ्यपात्रेति * अर्घ्यपात्रानुमितव्ययस्य मृन्मयजलपात्रतर्कितसर्वस्वत्यागस्य रघोः दिलीपपुत्रस्य इति उक्तप्रकाराम् औदार्यशालिनीं गां वाचं निशम्य श्रुत्वा वरतन्तुशिष्यो वरतन्तोरन्तेवासी (कौत्सः) स्वार्थोपपत्तिं स्वकार्यसिद्धिं प्रति दुर्बलाशः शिथिलमनोरथः सन् तं रघुम् इति वक्ष्यमाणप्रकारेण अवोचत् जगाद । रघोरौदार्यवतीं वाणीं श्रुत्वा मृन्मयपात्रदर्शनाच्छिथिलमनोरथः कौत्सस्तम्प्रत्युवाचेत्यर्थः ।

( समासः ) अर्घ्यपात्रेणाऽनुमितो व्ययो यस्य सोऽर्घ्यपात्रानुमितव्ययस्तस्य । स्वार्थस्योपपत्तिः स्वार्थोपपत्तिस्ताम् । दुर्बला आशा यस्य सः । वरतन्तोः शिष्यो वरतन्तुशिष्यः ॥ १२ ॥

* सर्वत्रेति * हे राजन् ? त्वं सर्वत्र सर्वस्मिन् विषये नोऽस्माकं वार्तं स्वास्थ्यम् अवेहि जानीहि त्वयि भवति नाथे रक्षके सति प्रजानां जनानां अशुभम् अमङ्गलं कुतो न कुतोऽप्यमङ्गलमित्यर्थः । तथा हि सूर्ये भानौ तपति प्रकाशमाने सति तमिस्रा ध्वान्ततातिः लोकस्य जनस्य दृष्टेश्चक्षुष आच्छादनाय कथं प्रकल्पते कुतः समर्था भवति न कुतोऽपीत्यर्थः । हे राजन् ! यथा सूर्ये प्रकाशमाने सति ध्वान्ततति लोक चक्षुरावरणाय नालं तथा त्वयि नाथेऽपि शुभङ्प्रजापीडिनायालमित्यर्थः ।

( समासः ) न शुभमशुभम् ॥ १३ ॥

*भक्तिरिति* प्रतीक्ष्येषु पूज्येषु भक्तिरनुरागविशेषस्ते तव कुलोचिता कुलाऽभ्यस्ता हे महाभाग हे सार्वभौम ! तया भक्त्या पूर्वान् स्वपूर्वजान् (राज्ञः) आतिशेषे अतिवर्तसे । अहं व्यतीतकालोऽतिक्रान्तसमयः सन् अर्थिभावात् याचकत्वाद्धेतोः त्वाम् अभ्युपेतः प्राप्त इति मे मम वि-

षादो खेदः । पूज्येष्वनुरागविशेषेण पूर्वजानत्यतिक्रम्य विद्यमानं त्वां समयं संयाच्यार्थिभावात्प्राप्तोऽस्मीत्यर्थः ।

(समासः) कुलेषूचिता कुलोचिता । व्यतीतः कालो यस्य सः । अर्थिनो भावोऽर्थिभावस्तस्मात् ॥ १४ ॥

* शरीरेति * हे नरेन्द्र ! तीर्थप्रतिपादितर्द्धिः सत्पात्रार्पितधनः शरीरमात्रेण कायेनैव अवतिष्ठन् विद्यमानः आरण्यकोपात्तफलप्रसूतिः आरण्योद्भवमनुष्यप्रभृतिच्छिन्नफलरूपप्रसवः स्तम्बेन काण्डेन अवशिष्टः शेषभावमापन्नो नीवार इव नीवाराख्यधान्यमिव आभासि शोभसे । यथा छिन्नप्रसवः स्तम्बावशिष्टो नीवारः शोभते तथा व्ययीभूतसर्वस्वः शरीरमात्रावशिष्टस्त्वं शोभसे इत्यर्थः ।

(समासः) शरीरमेव शरीरमात्रं तेन । तीर्थे प्रतिपादिता ऋद्धिर्येन सः । आरण्यकैरुपात्ता फलमेव प्रसूतिर्यस्य सः ॥ १५ ॥

*स्थान इति* भवान् एकनराधिपः सार्वभौमः सन् मखजं मखजन्यम् अकिञ्चनत्वं निर्धनत्वं व्यनक्ति प्रकटयति स्थानं युक्तम् हि तथा हि सुरैः देवैः पर्यायपीतस्य क्रमप्राप्तस्य हिमांशोश्चन्द्रस्य कलाक्षयः षोडशभागह्रासः वृद्धेरुपचयात् श्लाघ्यतरः श्रेष्ठः । (अस्तीति क्रियाशेषः) । यथा चन्द्रकलाक्षयो वृद्धेर्हेतोः श्लाघ्यतरस्तथा तव सर्वस्वत्यागोऽपि वृद्ध्यर्थत्वाच्छ्रेष्ठ एवेति भावः ।

(समासः) एकश्चासौ नराधिप एक नराधिपः न विद्यते किञ्चन यस्य सोऽकिञ्चनस्तस्य भावोऽकिञ्चनत्वम् । पर्यायेण पीतः पर्यायपीतस्तस्य । कलानां क्षयः कलाक्षयः । अतिशयेन श्लाघ्य श्लाघ्यतरः ॥१६॥

* तदिति * तत् तस्मात्कारणात् तावत् आदौ अनन्यकार्यः प्रयोजनान्तररहितः अहम् अन्यतोऽन्यस्मात् ( वदान्यान्तरात् ) गुर्वर्थं गुरुधनम् आहर्तुम् अर्जयितुं यतिष्ये उद्योक्ष्ये ते तुभ्यं स्वस्ति शुभमस्तु तथाहि चातकः पक्षिविशेषः निर्गलिताम्बुगर्भं पतितजलगर्भं शरद्घनं शरत्कालिकमेघं नार्दति न याचते । यथा चातकः शरत्कामेघं नार्दति न याचते । यथा चातकः शरत्काऽलिकमेघं निर्जलं न याचते तथा त्वामपि निर्धनं न याचे इत्यर्थः । चातकस्य शरत्कालिकमेघम्प्रति याचनमिव मम त्वाम्प्रति याचनं व्यर्थमिति भावः ।

(समासः) न अन्यं कार्यं यस्य सोऽनन्यकार्यः । गुरोरर्थो गुर्वर्थस्तम् । निर्गलितोऽम्ब्वेव गर्भो यस्य स निर्गलिताम्बुगर्भस्तम् । शरदो घनः शरद्घनस्तम् ॥ १७ ॥

*एतावदिति* एतावत् वाक्यम् उक्त्वा अभिधाय प्रतियातुकामं गन्तुकामं महर्षेः वरतन्तोः शिष्यं कौत्सं नृपतिः रघुः निषिध्य निवार्य हे विद्वन् ! त्वया भवता गुरवे ( वरतन्तवे) प्रदेयं दातव्यं वस्तु किं किंमात्मकं कियत् किं परिमाणं वा इति एवं तं कौत्सम् अन्वयुङ्क्त अपृच्छत् । रघुः कौत्सं गुरुप्रदेयं वस्तु पृष्टवानित्यर्थः ।

( समासः ) प्रतियातुं कामो यस्य स प्रतियातुकामस्तम् । महांश्चासावृषिर्महर्षिस्तस्य ॥ १८ ॥

*तत इति* ततस्तदनन्तरं यथावत् यथार्हं विहिताध्वराय कृतयज्ञाय ( विधिवदनुष्ठितमखाय ) स्मयावेशविवर्जिताय गर्वाभिनिवेशशून्याय ( अनुद्धताय ) वर्णाश्रमाणां ब्रह्मचर्यादीनां गुरवे नियामकाय तस्मै रघवे विचक्षणो विद्वान् वर्णी ब्रह्मचारी स कौत्सः प्रस्तुतं प्रकृतम् आचचक्षे कथितवान् । रघुणा पृष्टस्योत्तरं कौत्सो दत्तवानित्यर्थः

( समासः ) विहिताऽध्वरो येन स विहिताध्वरस्तस्मै । स्मयस्याऽऽवेशः स्मयावेशस्तेन विवर्जितः स्मयावेशविवर्जितस्तस्मै । वर्णानामाश्रमा वर्णाश्रमास्तेषाम् ॥ १९ ॥

*समाप्तेति* समाप्तविद्येन पठितशास्त्रेण मया महर्षिः गुरुः ( वरतन्तुः । ) गुरुदक्षिणायै गुरुदक्षिणास्वीकारार्थं विज्ञापितो निवेदितोऽभूत् । स च गुरुः चिराय चिरकालपर्यन्तम् अस्खलितोपचारान् अत्यक्तप्रकारां तां दुष्करां भक्तिमेव पुरस्तात् प्रथमम् अगणयत् संख्यातवान् । मया विज्ञापितो गुरुः तव भक्त्यैव तुष्टोऽस्मि किं दक्षिणयेत्युक्तवानिति रघुम्प्रति कौत्सोऽब्रवीदित्यर्थः ।

( समासः ) समाप्ता विद्या येन स समाप्तविद्यस्तेन । गुरोर्दक्षिणा गुरुदक्षिणा तस्यै । अस्खलित उपचारो यस्याः साऽस्खलितोपचारा ताम् ॥ २० ॥

*निर्बन्धेति* निर्बन्धसञ्जातरुषा प्रार्थनातिशयोत्पन्नक्रोधेन गुरुणा महर्षिणा ( वरतन्तुना ) अर्थकार्श्यं दारिद्र्यम् अचिन्तयित्वा अविचार्य वित्तस्य धनस्य चतस्रो दश च कोटीः चतुर्दशकोटीः मे मह्यम् आहर आनय इति विद्यापरिसंख्यया विद्याऽनुसारेणैव उक्तोऽभिहितः । गुरुश्चतुर्दशकोटीः द्रव्याण्यानेतुमाज्ञापितवानित्यर्थः ।

( समासः ) निर्बन्धेन सञ्जाता रुट् यस्य स निर्बन्धसञ्जातरुट् तेन । अर्थस्य कार्श्यमर्थकार्श्यम् । विद्यानां परिसंख्या विद्यापरिसंख्या तया ॥ २१ ॥

*स इति* स अहं सपर्याविधिभाजनेन पूजापात्रेण ( अर्घ्यपात्रेण ) भवन्तं त्वां प्रभुशब्दशेषं निर्धनं मत्वा निश्चित्य श्रु निष्क्रयस्य

विद्यामूल्यस्य अल्पेतरत्वात् अत्याधिक्यात् सम्प्रति इदानीम् उपरोद्धु निर्बन्धु न अभ्युत्सहे नेच्छामि। भवान् सम्प्रति निर्द्धनोऽस्ति गुरुदक्षिणायाश्चाधिक्यमतो दुःखिनं भवन्तं पुनर्दुःखितमं कर्तुं नेच्छामीत्यर्थः

(समासः) सपर्याया विधिः सपर्याविधिस्तस्य भाजनं सपर्याविधिभाजनं तेन। प्रभुरितिशब्दः प्रभुशब्दः स शेषो यस्य स प्रभुशब्दशेषस्तम। अल्पादितरोऽल्पेतरस्तस्य भावोऽल्पेतरत्वं तस्मात्। श्रुतस्य निष्क्रयः श्रुतनिष्क्रयस्तस्य ॥ २२ ॥

*इत्थमिति* द्विजराजकान्तिश्चन्द्रद्युतिः यतोनिवृत्तेन्द्रियवृत्तिः पापविमुखेन्द्रियव्यापारः जगदेकनाथः चक्रवर्ती (रघुः) वेदविदाम्बरेण वेदज्ञानां श्रेष्ठेन द्विजेन कौत्सेन इत्थमुक्तप्रकारेण आवेदितो निवेदितः सन् एनं कौत्सम्प्रति भूयः पुन र्जगाद अब्रवीत्। निःस्वं मां विज्ञाय निराशोऽयं गमिष्यतीत्यालोच्य तन्मनोरथपूर्त्तिकामनया भूयस्तमुवाचेत्यर्थः।

(समासः) द्विजानां राजा द्विजराजस्तस्य कान्तिरिव कान्तिर्यस्य सः। वेदं विदन्तीति वेदविदस्तेषाम्। यतस्तो निवृत्ता इन्द्रियस्य वृत्तिर्यस्य सः। एकश्चासौ नाथ एकनाथो जगतामेकनाथो जगदेकनाथः २३

*गुर्वर्थमिति* श्रुतपारदृश्वा शास्त्रपारङ्गतः गुर्वर्थं गुरुदक्षिणार्थं अर्थी याचकः कौत्सः रघो र्दिलीपसूनोः सकाशात् कामं मनोरथम् अनवाप्य अप्राप्य वदान्यान्तरम् अन्यदातारं गतः प्राप्त इति परीवादनवावतारोऽपवादप्रथमाऽऽविर्भावो मा भूत् माऽस्तु। मत्तोऽन्यत्र गमिष्यसि चेत्तर्हि मेऽयशः स्यादिति रघुः कौत्सम्प्रत्युक्तवानित्यर्थः।

(समासः) गुरोरर्थो गुर्वर्थस्तम् अर्थोऽस्यास्तीत्यर्थी। श्रुतस्य पारः श्रुतपारस्तं दृष्टवान् श्रुतपारदृश्वा। अन्यो वदान्यो वदान्यान्तरस्तम्। नवश्चासावतारो नवावतारः परीवादस्य नवावतारः परीवादनवावतारः ॥ २४ ॥

*स इति* स त्वं महिते प्रशस्ते प्रसिद्धे मदीये मामकीने अग्न्यगारे त्रेताग्निशालायां चतुर्थस्तुर्योऽग्निर्वह्निरिव वसन् तिष्ठन् द्वित्राणि द्वे त्रीणि वा अहानि दिनानि सोढुं मर्षितुमर्हसि। हे अर्हन् मान्य! त्वदर्थं तव प्रयोजनं साधयितुं सम्पादयितुं यावत् यते यतिष्ये। हे मान्य दिनत्रयं यावदग्निशालायां तिष्ठतु यावत्तव कार्यं सम्पादयिष्यामीत्यर्थः।

(समासः) अग्नेरगारोऽग्न्यगारस्तस्मिन्। द्वे त्रीणि वा द्वित्राणि। तव अर्थस्त्वदर्थस्तम् ॥ २५ ॥

*तथेतीति* अग्रजन्मा ब्राह्मणः प्रतीतः प्रीतः सन् तस्य रघोः अवितथम् अमोघं सङ्गरं प्रतिज्ञां तथा इति प्रत्यग्रहीत् स्वीकृतवान् । रघुर्दिलीपसूनुः आत्तसारां गृहीतसर्वस्वां गां पृथ्वीम् अवेक्ष्य दृष्ट्वा कुवेरात् अर्थं धनं निष्क्रष्टुम् आहर्तुं चकमे ववाञ्छ । रघुवचनमङ्गीकृत्य स्थिते कौत्से रघुः कुवेराद्धनमाहर्तुमिच्छतिस्मेत्यर्थः ।

( समासः ) न वितथोऽवितथस्तम् । अग्रे जन्म यस्य सः । आत्तः सारो यस्याः साऽऽत्तसारा ताम् ॥ २६ ॥

*वसिष्ठेति* वसिष्ठमन्त्रोक्षणजात् वसिष्ठमन्त्रप्रोक्षणोत्पन्नात् प्रभावात् सामर्थ्यात् उदन्वदाकाशमहीधरेषु समुद्रव्योम-पर्वतेषु मरुत्सखस्य वायुमित्रस्य वलाहकस्य मेघस्य इव तद्रथस्य रघुस्यन्दनस्य गतिः सञ्चारो न विजघ्ने न विहता । वसिष्ठमन्त्रसेचनसामर्थ्येन रघुरथस्य गमनं सर्वत्राप्रतिहतमित्यर्थः ।

( समासः ) वसिष्ठस्य मन्त्रो वसिष्ठमन्त्रस्तेनोक्षणं वसिष्ठमन्त्रोक्षणं तस्माज्जातो वसिष्ठमन्त्रोक्षणजस्तस्मात् । उदन्वांश्च आकाशश्च महीधराश्च उदन्वदाकाशमहीधरास्तेषु । मरुतः सखा मरुत्सखस्तस्य । तस्य रथस्तद्रथस्तस्य ॥ २७ ॥

*अथेति* अथानन्तरं प्रदोषे सायंकाले प्रयत उद्युक्तो धीरो धैर्यवान् रघुः सामन्तसम्भावनया सकलनृपतिसम्भावनयैव कैलासनाथं कुवेरं तरसा वेगेन जिगीषु जेतुमिच्छुः सन् कल्पितशस्त्रगर्भे सज्जितशस्त्रमध्यं रथम् आधिशिश्ये रथे शयितवानित्यर्थः । कुवेरं जिगीषु रघुः प्रदोषे शस्त्राण्यादाय रथे सुष्वापेत्यर्थः ।

( समासः ) कल्पितं शस्त्रं गर्भे यस्य स कल्पितशस्त्रगर्भस्तम् । समन्ताद्भवः सामन्तस्तस्य सम्भावना सामन्तसम्भावना तया । कैलासस्य नाथः कैलासनाथस्तम् । जेतुमिच्छुर्जिगीषुः ॥ २८ ॥

*प्रातरिति* प्रातः प्रभातकाले प्रयाणाऽभिमुखाय प्रस्थानोत्सुकाय तस्मै रघवे कोषगृहे भाण्डागारे नियुक्ता अधिकृताः ( भाण्डागारिकाः ) सविस्मयाः साश्चर्याः सन्तः कोषगृहस्य मध्ये भाण्डागारस्यान्तरे नभस्त आकाशात् पतितां समागतां हिरण्मयीं सुवर्णमयीं वृष्टिं शशंसुः कथयामासुः । कोषाध्यक्षाः कोषगृहे आकाशाद्भूतां सुवर्णवृष्टिं प्रस्थानोत्सुकाय रघवे निवेदयामासुरित्यर्थः ।

( समासः ) प्रयाणस्याऽभिमुखः प्रयाणाऽभिमुखस्तस्मै । विस्मयेन सहिताः सविस्मयाः । हिरण्यस्य विकारभूता हिरण्मयी ताम् । कोषस्य गृहं कोषगृहं तस्य ॥ २९ ॥

*तमिति* भूपतिः रघुः अभियास्यमानात् अभिगमिष्यमाणात् कुबेरात् अलकाऽधिपतेः सकाशात् लब्धं प्राप्तं (धनं) वज्रभिन्नं कुलिशविदीर्णं सुमेरोः हेमाद्रेः पादं प्रत्यन्तपर्वतमिव (स्थितम्) तं भासुरहेमराशिं भास्वरस्वर्णसमूहं समस्तं कृत्स्नमेव कौत्साय वरतन्तुशिष्याय दिदेश दत्तवान्। रघुः कुबेराद्यावद्धनं लब्धं तावत्सर्वं कौत्साय दत्तवानित्यर्थः।

(समासः) भासुराणि च तानि हेमानि भासुरहेमानि तेषां राशिर्भासुरहेमराशिस्तम्। अभियास्यते इत्यभियास्यमानस्तस्मात्। वज्रेण भिन्नं वज्रभिन्नम् ॥ ३० ॥

*जनस्येति* तौ अर्थिदातारौ याचक–दानकर्तारौ द्वावुभावपि साकेतनिवासिनोऽयोध्यावास्तव्यस्य जनस्य लोकस्य अभिनन्द्यसत्त्वौ स्तुत्यव्यवसायौ अभूताम्। कौ द्वौ गुरुप्रदेयाधिकनिस्पृहो गुर्वर्थविशेषधनानिराकाङ्क्षी अर्थी (कौत्सः) अर्थिकामाद्याचकमनोरथादधिकप्रदो विशेषदाता नृपश्च। गुरुप्रदेयादधिकनिराकाङ्क्षिनं कौत्सं कौत्समनोरथादधिकप्रदातारं नृपं च साकेतवासिनो जनाः प्रशशंसुरित्यर्थः।

(समासः) साकेतं निवसन्ति तच्छीलाः साकेतनिवासिनः। अभिनन्द्यौ च तौ सत्त्वावभिनन्द्यसत्त्वौ। गुरवे प्रदेयं गुरुप्रदेयं तस्मादधिकं गुरुप्रदेयाधिकं तस्मिन्निस्पृहो गुरुप्रदेयाधिकनिस्पृहः। अर्थिनः कामोऽर्थिकामस्तस्मात्। अधिकं प्रददातीति अधिकप्रदः ॥ ३१ ॥

*अथेति* अथाऽनन्तरं प्रीतमनाः प्रसन्नचित्तो महर्षिः कौत्सः संप्रस्थितः प्रस्थास्यमानः सन् उष्ट्रवामीशतवाहितार्थं क्रमेलक–वडवाशतप्रापितधनम् आनतपूर्वकायं विनयनम्रशिरसं प्रजेश्वरं नृपं (रघुं) करेण हस्तेन स्पृशन् वाचं वाणीम् उवाच जगाद। साकेतवासिप्रशंसोत्तरं प्रस्थास्यमानः कौत्सो रघुम्प्रति वक्ष्यमाणम्वचो जगादेत्यर्थः।

(समासः) उष्ट्राश्च वाम्यश्चोष्ट्रवाम्यस्तासां शतानि उष्ट्रवामीशतानि तैर्वाहितोऽर्थो येन स उष्ट्रवामीशतवाहितार्थस्तम्। प्रजानामीश्वरः प्रजेश्वरस्तम्। प्रीतं मनो यस्य सः। महांश्चासावृषि महर्षिः। पूर्वश्चासौ कायः पूर्वकायः आनतः पूर्वकायो यस्य सः आनतपूर्वकायस्तम् ॥३२॥

*किमिति* वृत्ते राजवृत्ते (धनस्य न्यायेनाऽर्जनादिरूपे) स्थितस्य विद्यमानस्य प्रजानां जनानामधिपतेः स्वामिनः (प्रजेश्वरस्य) भूः पृथिवी कामसूः कामप्रसवा यदि अत्राऽस्मिन्विषये (कामप्रसवने) किं चित्रं किमाश्चर्यं न किमपि चित्रमित्यर्थः। किन्तु तव प्रभावस्तव माहात्म्यं (महिमा) अविचिन्तनीयोऽविचारणीयः येन त्वया द्यौरपि स्वर्गोऽपि

मनीषितम् अभिलषितं दुग्धा । हे राजन् त्वमचिन्तनीयमहिमाऽसि यतः स्वर्गमपि यथाऽभिलषितं धोक्षीत्यर्थः ।

( समासः ) कामान् सूते इति कामसूः । चिन्तितुं योग्यश्चिन्तनीयो न चिन्तनीयोऽचिन्तनीयः ॥ ३३ ॥

*आशास्यमिति* सर्वाणि सकलानि श्रेयांसि भद्राणि अधिजग्मुषः प्राप्तवतस्ते तव अन्यत्पुत्रातिरिक्तम् आशास्यम् आशीःसाध्यम् (आशंसनीयस्वा) पुनरुक्तभूतं ( सर्वसिद्धम् ) किन्तु ईड्यं स्तुत्यं भवन्तं भवतः पितेव ( दिलीप इव ) आत्मगुणानुरूपं स्वसदृशगुणं पुत्रं सुतं लभस्व प्राप्नुहि । सकलकल्याणभाक् त्वं स्वतुल्यगुणं पुत्रं प्राप्नुहीत्यर्थः ।

( समासः ) आशासितुं योग्यम् आशास्यम् । आत्मनो गुणा आत्मगुणास्तेषामनुरूप आत्मगुणानुरूपस्तम् ॥ ३४ ॥

*इत्थमिति* अग्रजन्मा ब्राह्मणः इत्थमुक्तरीत्या राज्ञे रघवे आशिषम् आशीर्वादं प्रयुज्य दत्वा गुरोः ( वरतन्तोः ) सकाशं समीपं प्रतीयाय प्राप । राजा रघुरपि जीवलोको जीवसमूहः अर्कात्सूर्यात् आलोकं प्रकाशमिव तस्मात् ऋषेः वरतन्तुशिष्यात् आशु शीघ्रं सुतं पुत्रं लेभे प्राप । कौत्सो रघवे आशीर्वादं दत्वा गतो रघुश्च पुत्रं लब्धवानित्यर्थः ।

( समासः ) अग्रे जन्म यस्य सः ॥ ३५ ॥

*ब्राह्मे इति* तस्य रघोः देवी महिषी ब्राह्मे ब्रह्मदेवताके ( अभिजिन्नाम्नि ) मुहूर्ते क्षणे (काले) किल निश्चयेन कुमारकल्पम् ईषदसमाप्तकुमारं (स्कन्दसदृशम्) कुमारं पुत्रं सुषुवे अतो ब्राह्ममुहूर्तोत्पन्नत्वात् पिता रघुः ब्रह्मणो विधातुरेव नाम्ना तम् आत्मजन्मानं पुत्रम् अजं चकार कृतवान् । रघुर्देव्यां जातं पुत्रं नाम्नाऽजं चकारेत्यर्थः ।

( समासः ) ईषदसमाप्तः कुमारः कुमारकल्पस्तम् ॥ ३६ ॥

*रूपमिति* ओजस्वि तेजस्वि बलिष्ठम्वा तत् पैतृकं रूपं सौन्दर्यम् तदेव पैतृकमेव वीर्यं सामर्थ्यं तदेव पैतृकमेव नैसर्गिकं स्वाभाविकम् उन्नतत्वम् ( इत्थं ) कुमारो बालकः ( अजः ) प्रवर्तित उत्पादितो दीपः प्रदीपः प्रदीपात् स्वोत्पादकदीपादिव स्वात् स्वकीयात् कारणात् उत्पादकात् ( जनकाद्रघोः ) न विभिदे भिन्नोऽभूत् । यथा दीपादुत्पन्नो दीपः सर्वात्मना दीपभिन्नो न तथा रघोरुत्पन्नः कुमारः सर्वात्मना रघुतुल्य एवाऽभूदित्यर्थः ।

( विग्रहः ) ओजोऽस्त्यस्येति ओजस्वि । निसर्गतो जातं नैसर्गिकम् ॥ ३७ ॥

*उपात्तेति* गुरुभ्यः शिक्षकेभ्यो विधिवत् यथाशास्त्रम् उपात्तवि-

घं पठितशास्त्रं यौवनोद्भेदविशेषकान्तं तारुण्याविर्भावाधिकसौन्दर्यं तम् अजं प्रति साऽभिलाषापि श्री राज्यलक्ष्मीः धीरा स्थिरोन्नतचित्ता सती कन्या सुता पितु र्जनकादिव गुरोः रघोः अनुज्ञाम् अनुमतिम् आचकाङ्क्ष। यथा धैर्यवती कन्या तारुण्यादिद्वारा पितुः सकाशाद्विवाहार्थमाज्ञामिच्छति तथा राज्यलक्ष्मीरपि तारुण्यादिसम्पन्नं कुमारमजम्प्राप्तुं रघोरनुमतिमियेषेत्यर्थः।

(समासः) उपात्ता विद्या येन स उपात्तविद्यस्तम्। यौवनस्योद्भेदो यौवनोद्भेदो विशेषेण कान्तो विशेषकान्तो यौवनोद्भेदेन विशेषकान्तो यौवनोद्भेदविशेषकान्तस्तम्। अभिलाषेण सहिता साऽभिलाषा ॥३८॥

*अथेति* अथ स्वसु र्भगिन्या इन्दुमत्याः स्वयंवरार्थे पाणिग्रहणार्थं कुमारानयनोत्सुकेन अजानयनोत्कण्ठितेन क्रथकैशिकानां विदर्भदेशानामीश्वरेण स्वामिना भोजेन तन्नामकेन राज्ञा आप्तो हितो दूतश्चरो रघवे विसृष्टः प्रेषितः। इन्दुमत्या अजेन सह पाणिग्रहणोत्सुको भोजो रघवे दूतं विसृष्टवानित्यर्थः।

(समासः) कुमारस्यानयनं कुमारानयनं तत्रोत्सुकः कुमारानयनोत्सुकस्तेन ॥ ३९ ॥

*तमिति* असौ रघुस्तं भोजं श्लाघ्यसम्बन्धं स्पृहणीयसम्बन्धत्वं विचिन्त्य विचार्य पुत्रम् अजञ्च दारक्रियायोग्यदशं विवाहयोग्यदशं विवाहयोग्यवयस्कं च विचिन्त्य विचार्य ससैन्यं सेनासमन्वितम् एनं पुत्रम् ऋद्धां समृद्धां विदर्भाधिपराजधानीं भोजपुरीं प्रति प्रस्थापयामास प्रेषयामास। रघु र्विवाहार्थमजं सेनासहितं भोजपुरीम्प्रति प्रेषितवानित्यर्थः।

(समासः) श्लाघ्यः सम्बन्धो यस्य स श्लाघ्यसम्बन्धस्तम्। दाराणां क्रिया तस्या योग्या दारक्रियायोग्या तादृशी दशा यस्य स दारक्रियायोग्यदशस्तम्। सैन्यैः सहितः ससैन्यस्तम्। विदर्भाणामधिपो विदर्भाधिपस्तस्य राजधानी विदर्भाधिपराजधानी ताम् ॥ ४० ॥

*तस्येति* उपकार्यारचितोपचारा राजयोग्यपटभवनाविष्कृतशयनादिः जानपदोपदाभिः जनपदागतोपायनैः वन्येतरा अवन्याः तस्य मनुजेन्द्रसूनोः रघुपुत्रस्य (अजस्य) मार्गे पथि निवासा वासनिका उद्यानविहारकल्पा आक्रीडविहारस्थानसदृशा बभूवु र्जाताः। यथा लोकानामुद्याने विहारवासो भवति तथा अजस्याऽपि मार्गे विहारवासा बभूवुरित्यर्थः।

(समासः) उपकार्यासु रचित उपचारो येषु ते। वन्येभ्य इतरा

वन्येतराः । जनपदेभ्य आगता जानपदास्तेषामुपदा जानपदोपदास्ताभिः । मनुजानामिन्द्रो मनुजेन्द्रस्तस्य सूनुर्मनुजेन्द्रसूनुस्तस्य । उद्यानान्येव विहारा उद्यानविहारास्तेषां कल्पा उद्यानविहारकल्पाः ॥ ४१ ॥

*स इति* विलङ्घिताध्वा अतिक्रान्तमार्गः सोऽजः सीकरार्द्रैः कणासिक्तैः मरुद्भि र्वायुभिः आवर्तितनक्तमाले कम्पितचिरबिल्ववृक्षभेदे नर्मदारोधसि नर्मदातटे क्लान्तं श्रान्तं रजोधूसरकेतु धूलिधूम्रध्वजं सैन्यं निवेशयामास स्थापयामास । अजो रेवातटे श्रान्तं सैन्यं श्रमापनयनाय स्थापयामासेत्यर्थः ।

( समासः ) नर्मदाया रोधो नर्मदारोधस्तस्मिन् । सीकरैरार्द्राः शीकरार्द्रास्तैः । आनर्तितो नक्तमालो यस्मिन् तत् आनर्तितनक्तमालं तस्मिन् । विलङ्घितोऽध्वा येन सः । रजोभिर्धूसरः केतु र्यस्य तत् ॥ ४२ ॥

*अथेति* अथाऽनन्तरम् उपरिष्टात् ऊर्ध्वं भ्रमराद्भिश्चलद्भिः भ्रमरैः द्विरेफैः प्राक्सूचितान्तःसलिलप्रवेशः उन्मज्जनात्पूर्वं ज्ञापितजलाभ्यन्तरगमनः । निर्धौतदानामलगण्डभित्तिः क्षालितमदनिर्मलकटकुड्यः वन्यो वनोद्भवो गजो हस्ती सरित्तो नदीतः उन्ममज्ज उत्थितः । स्नातुं प्रविष्टा वन्यगजाः सरित उन्ममज्जुरित्यर्थः ।

( समासः ) प्राक् सूचिताऽन्तः सलिले प्रवेशो यस्य सः । निर्धौतं दानं ययोस्ते निर्धौतदाने तादृशेऽमले गण्डभित्ती यस्य सः ॥ ४३ ॥

*निश्शेषेति* निश्शेषविक्षालितधातुना सकलधौतगैरिकादिना ऽपि नीलोर्ध्वरेखाशवलेन तटाभिघातजनितनीलोर्ध्वरेखाकर्बुरेण अश्मविकुण्ठितेन पाषाणकुण्ठीकृतेन दन्तद्वयेन दशनयुगलेन ऋक्षवतस्तन्नाम्नः पर्वतस्य तटेषु कूलेषु वप्रक्रियामुत्खातकेलिं शंसन् कथयन् गजः सरित्त उन्ममज्जेति पूर्वेणान्वयः ।

( समासः ) निश्शेषं यथा तथा विक्षालितो धातु र्येन तत् निश्शेषविक्षालितधातु तेन । नीलाश्च ता ऊर्ध्वरेखा नीलोर्ध्वरेखास्ताभिः शबलं नीलोर्ध्वरेखाशबलं तेन । दन्तयोर्द्वयं दन्तद्वयं तेन । अश्मभिर्विकुण्ठितमश्मविकुण्ठितं तेन ॥ ४४ ॥

*संहारेति* संहारविक्षेपलघुक्रियेण सङ्कोचनप्रसारणक्षिप्रव्यापारेण हस्तेन शुण्डादण्डेन सशब्दं सघोषं बृहतो महतस्तरङ्गान् भङ्गान् भिन्दन् विदारयन् तीराभिमुखः तटसम्मुखः स गजः वार्यर्गलाभङ्ग गजबन्धनस्थानविष्कम्भभञ्जने प्रवृत्त उद्युक्त इव बभौ भातिस्म । वन्यगजः शीघ्रतया शुण्डादण्डस्य सङ्कोचन-प्रसारणाभ्यां सशब्दं यथा

तथा तरङ्गान् विदारयन् कूलाभिमुखवर्ती सन् गजबन्धनस्थानरूपाऽर्गलाभञ्जने उद्यत इव भातिस्मेत्यर्थः।

( समासः ) संहारश्च विक्षेपश्च संहारविक्षेपौ तयो र्लध्वी क्रिया यस्य स संहारविक्षेपलघुक्रियस्तेन तीरस्याऽभिमुखस्तीराभिमुखः। शब्देन सहितं सशब्दं ( क्रियाविशेषणमिदम् ) वार्येवाऽर्गला वार्यर्गला तस्या भङ्गो वार्यर्गलाभङ्गस्तस्मिन् ॥ ४५ ॥

*शैलोपम इति* शैलोपमः पर्वतसदृशः स गजः शैवलमञ्जरीणां जालानि वृन्दानि उरसा वक्षःस्थलेन कर्षन् आकर्षन् पश्चात् कियत्कालानन्तरं तटं कूलम् उत्ससर्प प्राप। पूर्वं प्राक् तदुत्पीडितवारिराशिः गजनुन्नजलसमूहः सरित्प्रवाहो नदीवेगस्तटं कूलमुत्ससर्प प्राप। स्नात्वा आगच्छतो गजात्प्रागेव तदुत्पीडितवारिराशिस्तटं प्राप गजस्तु पश्चात्तटम्प्रापेत्यर्थः।

( समासः ) शैल उपमा यस्य सः। शैवलानां मञ्जर्यः शैवलमञ्जर्यस्तासाम्। तेनोत्पीडितस्तदुत्पीडितः वारिणो राशिर्वारिराशिस्तदुत्पीडितश्चासौ वारिराशिस्तदुत्पीडितवारिराशिः। सरितः प्रवाहः सरित्प्रवाहः ॥ ४६ ॥

*तस्येति* तस्य एकनागस्य एकाकिनो गजस्य कपोलभित्त्योः कटकुड्ययोः ( विषये ) जलावगाहक्षणमात्रशान्ता सलिलविलोडनमुहूर्तमात्रनिवृत्ता मददुर्दिनश्रीः मदवर्षलक्ष्मीः वन्येतरानेकपदर्शनेन ग्राम्यहस्तिविलोकनेन पुन र्भूयो दिदीपे ववृधे। वन्यगजस्य मदधारा ग्राम्यहस्तिविलोकनाद्ववृधे इत्यर्थः।

( समासः ) एकश्चासौ नाग एकनागस्तस्य। क्षणमात्रं शान्ता क्षणमात्रशान्ता जलावगाहेन क्षणमात्रशान्ता जलावगाहक्षणमात्रशान्ता। वन्येभ्य इतरा वन्येतरा वन्येतराश्च तेऽनेकपा वन्येतरानेकपास्तेषां दर्शनं वन्येतरानेकपदर्शनं तेन। मदस्य दुर्दिनं मददुर्दिनं तस्य श्रीर्मददुर्दिनश्रीः ॥ ४७ ॥

*सप्तच्छदेति* सप्तच्छदक्षीरकटुप्रवाहं सप्तपर्णदुग्धसुरभिप्रसारम् असह्यम असहनीयम् तदीयं वन्यसम्बन्धिनं मदम् आघ्राय घ्रात्वा सेनागजेन्द्राः सैन्यमत्तहस्तिनः विलङ्घिताधोरणतीव्रयत्नाः तिरस्कृतहस्तिपकमहोद्योगाः सन्तः विमुखाः पराङ्मुखा बभूवुः जाताः। सैन्यमत्तहस्तिनो वन्यगजमदमाघ्राय पराङ्मुखा बभूवुरित्यर्थः।

( समासः ) सप्तच्छदस्य क्षीरं सप्तच्छदक्षीरं तद्वत्कटुः प्रवाहो यस्य स सप्तच्छदक्षीरकटुप्रवाहस्तम् तस्येदं तदीयम। तीव्रश्चासौ प्रय-

स्तीव्रप्रयत्नः आधोरणानां तीव्रप्रयत्न आधोरणतीव्रप्रयत्नो विलङ्घित आधोरणतीव्रप्रयत्नो यैस्ते । गजानामिन्द्रा गजेन्द्राः सेनाया गजेन्द्राः सेनागजेन्द्राः ॥ ४८ ॥

* स इति * स गजः छिन्नबन्धद्रुतयुग्यशून्यं खण्डितबन्धनपलायितवाहरहितं भग्नाक्षपर्यस्तरथं त्रुटिताक्षपतितस्यन्दनं रामापरित्राणविहस्तयोधं स्त्रीसंरक्षणव्याकुलसैनं सेनानिवेशं सैन्यशिविरं तुमुलं सङ्कुलं चकार कृतवान् । आघ्रातवन्यगजमदो गजः सैन्यावासस्थानं व्याकुलं कृतवानित्यर्थः ।

( समासः ) छिन्ना बन्धा येषां ते छिन्नबन्धाः द्रुताश्च ते युग्या द्रुतयुग्या छिन्नबन्धा द्रुतयुग्या यस्मिन् स छिन्नबन्धद्रुतयुग्यः स चासौ शून्यश्छिन्नबन्धद्रुतयुग्यशून्यस्तम् । भग्ना अक्षा अत एव पर्यस्ता रथा यस्मिन् स भग्नाक्षपर्यस्तरथस्तम् । रामाणां परित्राणं रामापरित्राणं तस्मिन् विहस्ता योधा यस्मिन् स रामापरित्राणविहस्तयोधस्तम् । सेनानां निवेशः सेनानिवेशस्तम् ॥ ४९ ॥

* तमिति * नृपते राज्ञो वन्य आरण्यः करी गजोऽवध्योऽहिंस्य इति श्रुतवान् शास्त्रतो ज्ञातवान् कुमारोऽजः आपतन्तम् आगच्छन्तं तं गजं (वन्यमितिशेषः) निवर्तयिष्यन् वारयिष्यन् अत एव नात्यायतकृष्टशार्ङ्गः ईषदाकृष्टचापः सन् विशिखेन बाणेन कुम्भे मस्तके जघान ताडयामास । अजो व्याकुलीकृतसैन्यावासमभिमुखमागच्छन्तं तं वन्यगजं बाणेन कुम्भं जघानेत्यर्थः ।

(विग्रहसमासौ) आपततीत्यापतन् तम् । हन्तुं योग्यो वध्यो न वध्योऽवध्यः।वने भवो वन्यः । न अत्यायतं यथा तथा कृष्टं शार्ङ्गं येन सः॥५०॥

* स इति * स गजो विद्धमात्रः किल नागरूपं गजशरीरमुत्सृज्य तद्विस्मितसैन्यदृष्टः तद्वृत्तान्तसाश्चर्यसेनासमुदायावलोकितः सन् स्फुरत्प्रभामण्डलमध्यवर्त्ति देदीप्यमानकान्तिसमूहान्तरविद्यमानं कान्तं मनोहरं व्योमचरं विद्याधरम् (?) वपुः शरीरं प्रपेदे प्राप । अजबाणविद्धमात्रो गजो नागस्वरूपंविहाय मनोहरं शरीरं प्रापेत्यर्थः ।

( विग्रह-समासौ ) विद्ध एव विद्धमात्रः । नागस्य रूपं नागरूपम् । तेन विस्मितानि तद्विस्मितानि तानि च तानि सैन्यानि तद्विस्मितसैन्यानि तै दृष्टस्तद्विस्मितसैन्यदृष्टः । प्रभानां मण्डलं प्रभामण्डलं स्फुरच्च तत्प्रभामण्डलं स्फुरत्प्रभामण्डलं तस्य मध्ये वर्तते तच्छीलं स्फुरत्प्रभामण्डलमध्यवर्ति । व्योम्नि चरतीति व्योमचरस्तम् ॥ ५१ ॥

*अथेति* अथानन्तरम् प्रभावोपनतैः सामर्थ्यप्राप्तैः कल्पद्रुमात्थैः सुरतरूत्पन्नैः पुष्पैः कुसुमैः कुमारम् अजम् अवकीर्य अभिवृष्य दशन-

भाभिर्दन्तकान्तिभिः सम्बर्द्धितोरःस्थलतारहारः समेधितवक्षःस्थलस्थूलमुक्ताहारो वाग्मी वक्ता ( स पुरुषः ) उवाच जगाद। त्यक्तनामरूपः स पुरुषो दिव्यकायम्प्राप्य कुमारं कल्पद्रुमपुष्पैरभिवृष्य प्रत्यब्रवीदित्यर्थः।

( समासः ) प्रभावेनोपनतानि प्रभावोपनतानि तैः। कल्पद्रुमादुत्थानि कल्पद्रुमोत्थानि तैः। दशनानां प्रभा दशनप्रभास्ताभिः। सम्बर्धित उरस्थले तारहारो येन सः॥ ५२॥

*मतङ्गशापादिति* अवलेपमूलात् गर्वकारणात् मतङ्गशापात् मतङ्गमुन्याक्रोशात् मतङ्गजत्वं हस्तित्वम् अवाप्तवान् प्राप्तवान् अस्मि। मां प्रियदर्शनस्य प्रियदर्शननाम्नो गन्धर्वपते र्गन्धर्वराजस्य तनूजं पुत्रं प्रियंवदं प्रियम्बदनामानम् अवेहि जानी हि। अहं प्रियदर्शननामगन्धर्वराजपुत्रो मतङ्गमुनिशापाद्गजयोनिम्प्राप्तवानस्मीति भावः।

(समासः) मतङ्गस्य शापो मतङ्गशापस्तस्मात्। अवलेपो मूलं यस्य सोऽवलेपमूलस्तस्मात्। मतङ्गाज्जातो मतङ्गजस्तस्य भावो मतङ्गजत्वम्। गन्धर्वाणां पति र्गन्धर्वपतिस्तस्य। प्रियम्बदतीति प्रियम्बदस्तम्॥ ५३॥

*सचेति* स च महर्षिश्च ( मतङ्गः ) प्रणतेन नम्रेण मया अनुनीतः स्तुतः सन् मृदुतां शान्तिम् अगच्छत् प्रापत्। हि तथाहि जलस्य उष्णत्वम् अग्न्यातपसंप्रयोगात् बह्निसूर्यसम्बन्धाद्भवति, यत् शैत्यं सा प्रकृतिः स्वभावः। जलस्य बन्ह्यादिसम्बन्धादुष्णत्वमिव महर्षिणामपराधात्कोपोऽन्यथा जलस्येव नैसर्गिकशैत्यमिति भावः।

( समासः ) अग्निश्च आतपश्च अग्न्यातपौ तयोः सम्प्रयोगोऽग्न्यातपसंप्रयोगस्तस्मात्॥ ५४॥

*इक्ष्वाकुवंशेति* इक्ष्वाकुवंशप्रभवः इक्ष्वाकुकुलोत्पन्नोऽजो रघुपुत्रः यदा ते तव कुम्भं मस्तकम् अयोमुखेन लौहाग्रेण बाणेन भेत्स्यति विदारयिष्यति तदा स्वेन स्वकीयेन वपुर्महिम्ना शरीरसामर्थ्येण पुनर्भूयः संयोक्ष्यसे सङ्गस्यते इति इत्थं स तपोनिधिः महर्षिः ( मतङ्गः ) माम् अवोचत् अब्रवीत्। रघुसूनुरजो यदा ते कुम्भं बाणेन भेत्स्यति तदा गन्धर्वशरीरं लप्स्यसे त्वमिति भावः।

( समासः ) इक्ष्वाकोर्वंश इक्ष्वाकुवंशः स प्रभवो यस्यसः। अयो मुखं यस्य सोऽयोमुखस्तेन। वपुषो महिमा वपुर्महिमा तेन। तपसां निधिस्तपोनिधिः॥ ५५॥

*सम्मोचित इति* चिरप्रार्थितदर्शनेन बहुकालवाञ्छितावलोकनेन सत्ववता बलवता त्वया अहं शापात् विरुद्धानुध्यानात् संमोचितो मोक्षं प्रापितः ( अस्मीति क्रियाशेषः ) चेत् यदि भवतस्तव प्रतिप्रियं प्रत्युपकारं न कुर्यां विदध्यां तदा स्वपदोपलब्धिः गन्धर्वशरीरलाभो

मे मम वृथा व्यर्थः स्यात् । हे राजन् त्वया शापान्मोचितेऽहं तव प्रत्युपकारं न कुर्यां चेत्तदा मे गन्धर्वत्वलाभो विफलः स्यादित्यर्थः ।

( समासः ) सत्वमस्यास्तीति सत्ववान् तेन । चिरं प्रार्थितं दर्शनं यस्य स चिरप्रार्थितदर्शनस्तेन । स्वस्य पदं स्वपदं तस्योपलब्धिः स्वपदोपलब्धिः ॥ ५६ ॥

*सम्मोहनमिति* हे सखे ! प्रयोगसंहारविभक्तमन्त्रं विक्षेपविनाशविभिन्नमन्त्रं गान्धर्वं गन्धर्वदेवताकं सम्मोहनं नाम मम अस्त्रम् आयुधम् आदत्स्व गृहाण यतः सम्मोहनास्त्रात् प्रयोक्तुरस्त्रप्रयोगिणोऽरिहिंसा शत्रुवधो न विजयश्च हस्ते हस्तगतो विजयश्च ( भवतीति क्रियाशेषः । हे सखे मत्तः सम्मोहनास्त्रं गृहाण अनेन शत्रुवधो न भविष्यति हस्तगतो विजयश्च भविष्यतीत्यर्थः ।

( समासः ) प्रयोगश्च संहारश्च प्रयोगसंहारौ तयो विंभक्तं मन्त्रं यस्य तत् प्रयोगसंहारविभक्तमन्त्रम् । गन्धर्वस्येदं गान्धर्वम् । अरीणां हिंसाऽरिहिंसा ॥ ५७ ॥

*अलमिति* किञ्च मां प्रति ह्रिया लज्जया ( प्रहारनिमित्तया ) अलं व्यर्थम् । यत् यस्मात्कारणात् त्वं भवान् मां प्रहरन् ताडयन्नपि मुहूर्तं क्षणमात्रं दयापरः कृपालुरभूः । तस्मात् कारणात् उपच्छन्दयति प्रार्थयमाने मयि प्रतिषेधरौक्ष्यं परिहारपारुष्यं न प्रयोज्यं न विधेयम् । प्रहारनिमित्तां लज्जां विहाय दयालु स्त्वं मत्प्रार्थनां स्वीकुर्विति भावः ।

( समासः ) दयायाः परो दयापरः । प्रतिषेध एव रौक्ष्यं प्रतिषेधरौक्ष्यम् । ( अभिधायेति शेषः ) ॥ ५८ ॥

*तथेतीति* नृसोमः पुरुषश्रेष्ठोऽस्त्रवित् आयुधज्ञः सोऽजः तथा इति सोमोद्भवायाः चन्द्रोत्पन्नायाः सरितो नद्याः ( नर्मदायाः ) पवित्रं पूतं पयो जलम् उपस्पृश्य पीत्वा ( आचम्य ) उदङ्मुखः उत्तराभिमुखः सन् निगृहीतशापात् निवर्तितविरुद्धानुध्यानात् तस्मात् प्रियम्वदात् अस्त्रमन्त्रं जग्राह गृहीतवान् । प्रियम्वदगन्धर्वराजपुत्रवचनं निशम्योत्तरमुखोऽजो नर्मदासरिज्जलमाचम्य तस्मादस्त्रमन्त्रं गृहीतवानित्यर्थः ।

( समासः ) सोम उद्भवो यस्याः सा सोमोद्भवा तस्याः । ना सोम इव नृसोमः । उदक् उत्तरं मुखं यस्य सः । अस्त्रं वेत्तीति अस्त्रवित् । निगृहीतः शापो यस्य स निगृहीतशापस्तस्मात् ॥ ५९ ॥

*एवामिति* एवमित्थम् अध्वनि मार्गे दैवयोगात् दैववशात् अचिन्त्यहेतु अनिर्धार्यकारणं सख्यं सखित्वम् आसेदुषोः प्राप्तवतोस्तयोरजाप्रियम्वदयो र्मध्ये एको गन्धर्वः चैत्ररथप्रदेशान् कुबेरोद्यानप्रदेशान् अपरोऽजः सौराज्यरम्यान् राजन्वत्तया मनोज्ञान् विदर्भान् देशान् ययौ

गतवान्। तावजाप्रियम्बदौ स्वस्वाभिलषितं स्थानं जग्मतुरित्यर्थः।

( समासः ) दैवस्य योगो दैवयोगस्तस्मात्। अचिन्त्यो हेतु र्यस्य तत्। चैत्ररथस्य प्रदेशाश्चैत्ररथप्रदेशास्तान्। सौराज्येन रम्याः सौराज्यरम्यास्तान् ॥ ६० ॥

*तमिति* नगरोपकण्ठे पुरसमीपे तस्थिवासं स्थितं तम् अजं तदागमारूढगुरुप्रहर्षः अजागमनोत्पन्नाधिकानन्दः क्रथकैशिकेन्द्रः विदर्भराजः प्रवृद्धोर्मिः प्रवृद्धतरङ्गः ऊर्मिमाली समुद्रश्चन्द्रमिव प्रत्युज्जगाम गतवान्। यथा समुद्रश्चन्द्रं विलोक्य सञ्जातहर्षः सन् तत्प्रत्युद्गच्छति तथा विदर्भराजोऽप्यागतमजम्विलोक्य तत्प्रत्युज्जगामेत्यर्थः।

( समासः ) नगरस्योपकण्ठो नगरोपकण्ठस्तस्मिन्। तस्याऽऽगमस्तदागमस्तेनाऽऽरूढो गुरुः प्रहर्षो यस्य सः। क्रथकैशिकानामिन्द्रः क्रथकैशिकेन्द्रः ऊर्मिरेव माला अस्त्यस्येति ऊर्मिमाली ॥ ६१ ॥

*प्रवेश्येति* एनम् अजम् अग्रयायी अग्रसरः ( सेवाधर्मेण पुरोगच्छन् ) नीचैर्नम्रः पुरं प्रवेशं कारयित्वा अर्पितश्रीः दत्तलक्ष्मीकः सन् ( अजं ) तथा तेन प्रकारेण उपाचरत् उपचरितवान् यथा येन प्रकारेण तत्र पुरे समेतो मिलितो जनो वैदर्भं भोजम् आगन्तुं प्राघूर्णिकं मेने ज्ञातवान् अजं गृहेशं गृहपतिं मेने ज्ञातवान्। नगरवासिनो भोजमागन्तुकमजंच गृहपतिं ज्ञातवन्त इत्यर्थः।

( समासः ) अग्रे याति तच्छीलोऽग्रयायी। अर्पिता श्रीर्येन सः। गृहस्येशो गृहेशस्तम् ॥ ६२ ॥

*तस्येति* रघुप्रतिनिधिः रघुतुल्यः सोऽजः प्रणतैर्नमस्कृतवद्भिः तस्याधिकारपुरुषैः भोजनियोगाधिकृतजनैः प्रदिष्टां निर्दिष्टां प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम् पूर्वद्वार (प्रवेशमार्ग) वेदि (स्थण्डल)स्थापित जलपूर्णघटां ( स्थापितमङ्गलकलशाम् ) रम्यां रमणीयां नवोपकार्यां नूतनराजभवनम् मदनः कामो बाल्यात् शैशवात् परामन्यां दशामवस्थां (तारुण्यम्) इव अध्युवास अधिष्ठितवान्। यथा कामो बाल्यावस्थानन्तरं तारुण्यमधितिष्ठति तथाऽजो भोजसदनमधिष्ठितवानित्यर्थः।

( समासः ) अधिकारस्य पुरुषा अधिकारपुरुषास्तैः। प्राग्द्वारस्य वेदिः प्राग्द्वारवेदिस्तत्र विनिवेशितः पूर्णकुम्भो यस्यां सा प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भा ताम्। रघोः प्रतिनिधः रघुप्रतिनिधिः। नवा चासावुपकार्या नवोपकार्या ताम् ॥ ६३ ॥

*तत्रेति* तत्र नवोपकार्यायां स्वयंवरसमाहृतराजलोकं स्वयम्वरहेतुकसम्मेलितनृपजनं कमनीयं स्पृहणीयं कन्याललाम कन्याश्रेष्ठं लिप्सोः लब्धुमिच्छोः अजस्य रघुसूनोः भावावबोधकलुषा पुरुषाऽभिप्रा-

धपरिज्ञानाऽसमर्था दयिता नारीव रात्रौ निशि निद्रा चिरेण चिरकालेन नयनाभिमुखी नेत्रगता बभूव जाता । रात्रावजः सुष्वापेति भावः ।

( समासः ) स्वयम्बरे समाहूतो राजलोको येन तत् । कन्यासु कन्यानां वा ललाम कन्याललाम । भावस्यावबोधो भावावबोधस्तत्र कलुषा भावावबोधकलुषा । नयनयोरभिमुखी नयनाभिमुखी ॥ ६४ ॥

*तामिति* कर्णभूषणनिपीडितपीवरांसं श्रोत्रालङ्करणमर्दितपीनस्कन्धं शय्योत्तरच्छदविमर्दकृशाङ्गरागं शयनपर्यास्तरणवस्त्रघर्षणविगताङ्गरागं प्रथितबोधं प्रकृष्टज्ञानं तम् अजम् सवयसस्तुल्यवयस्का उदारवाचः प्रगल्भवचनाः सूतात्मजा बन्दिपुत्राः वाग्भिः वचनैः (स्तुतिपाठैः) उषसि प्रभाते प्राबोधयन् प्रबोधयामासुः । सुप्तमजं बन्दिपुत्राः स्तुतिपाठैरुषसि जागरयामासुरित्यर्थः ।

( समासः ) कर्णयो र्भूषणे कर्णभूषणे ताभ्यां निपीडितो पीवरावंसौ यस्य स कर्णभूषणनिपीडितपीवरांसस्तम् । शय्याया उत्तरच्छदः शय्योत्तरच्छदस्तस्य विमर्देन कृशोऽङ्गरागो यस्य स शय्योत्तरच्छदविमर्दकृशाङ्गरागस्तम् । सूतानामात्मजाः सूतात्मजाः । समानं वयो येषां ते सवयसः । प्रथितः प्रबोधो यस्य स प्रथितप्रबोधस्तम् । उदारा वाक् येषां ते ॥ ६५ ॥

*रात्रिरिति* हे मतिमताम्बर हे प्रशस्तबुद्धिमन् ! रात्रिर्निशा गता व्यतीता शय्यामास्तरणं मुञ्च त्यज ( विनिद्रो भव ) धात्रा ब्रह्मणा जगतो भुवनस्य धू र्भारो द्विधैव द्वयोरेव विभक्तां विभज्य स्थापिता । तां धुरमेकत एक कोटौ तव गुरुस्तव पिता (रघुः) विनिद्रो निरालस्यः सन् बिभर्त्ति धारयति तस्या धुरो भवान् अपरधुर्यपदावलम्बी अन्यवहनस्थानवाही अस्ति अतो विनिद्रो भवेत्यर्थः ।

( समासः ) विगता निद्रा यस्य स विनिद्रः । धुरं वहतीति धुर्यस्तस्य पदं धुर्यपदं अपरं च तत् धुर्यपदमपरधुर्यपदं तदलम्बते तच्छीलोऽपरधुर्यपदावलम्बी ॥ ६६ ॥

*निद्रावशेनेति* निद्रावशेन निद्राऽधीनेन भवता त्वया पर्युत्सुकत्वं त्वय्यनुरक्तत्वमपि निशि रात्रौ खण्डिता भर्तुरन्यासङ्गज्ञानकलुषिता अबला नायिका इव अनवेक्षमाणा अविचारयन्ती ( उपेक्षमाणा ) सती लक्ष्मीः येन चन्द्रेण पर्युत्सुकत्वं त्वद्विरहवेदनां विनोदयति निरासयति स चन्द्रोऽपि दिगन्तलम्बी पश्चिमासां गतः सन् त्वदाननरुचिं त्वन्मुखसादृश्यं विजहाति त्यजति भवतोपेक्षमाणा लक्ष्मी येन चन्द्रेण त्वद्विरहवेदनां निरासयति सोऽपि चन्द्रोऽस्तं गच्छत्यतो विनिद्रः सन्नन्यशरणां लक्ष्मीं परिगृहाणेति भावः ।

( समासः ) निद्राया वशो निद्रावशस्तेन । अवेक्षत इति अवेक्षमाणा

न अवेक्षमाणा अनवेक्षमाणा। दिशामन्तो दिगन्तस्तमवलम्बते तच्छीलो दिगन्तलम्बी। तवाऽननं त्वदाननं तस्य रुचिस्त्वदाननरुचिस्ताम्॥६७॥

*तदिति* तत् तस्मात् लक्ष्मीपरिग्रहणात् हेतोः वल्गुना मनोज्ञेन युगपत् एकदैव तावत् उन्मिषितेन उन्मीलितेन सद्यस्तत्क्षणम् अन्तः प्रस्पन्दमानपरुषेतरतारं चलत्स्निग्धकनीनिकं तव चक्षुर्नेत्रम् अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं कमलं च इमे द्वेऽपि परस्परतुलाम् अन्योऽन्यसादृश्यम् अधिरोहतां प्राप्नुताम्। त्वयि कृते लक्ष्मीपरिग्रहणे तव चक्षुः पद्मं च परस्परसादृश्यम्प्राप्स्यत इत्यर्थः।

(समासः) परस्परयोस्तुला परस्परतुला ताम्। प्रस्पन्दमाना परुषेतरा तारा यस्य तत्। प्रचलिता भ्रमरा यस्य तत्॥ ६८॥

*वृन्तादिति* विभातवायुः प्रभातपवनः स्वाभाविकं नैसर्गिकं ते-तव मुखमारुतस्य मुखवायोः सौरभ्यं सौगन्ध्यम् परगुणेन अन्यदीयगुणेन सांसर्गिकसौरभेण ईप्सुः आप्तुमिच्छुरिव अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं कुसुमं वृन्तात् प्रसवबन्धनात् हरति आदत्ते (गृह्णाति) अरुणांशुभिन्नैः सूर्यकिरणविकासितैः सरसिजैः कमलैः संसृज्यते सङ्गच्छते। प्रभातवायुस्तव मुखसौरभमाप्तुमिच्छुरिव पुष्पमादत्ते विकसितकमलञ्च संश्लिष्यतीत्यर्थः।

(समासः) न ओकं जहतीत्यनोकहास्तेषाम्। सरसि जातानि सरसिजानि तैः। अरुणांशुभिर्भिन्नानि अरुणांशुभिन्नानि तैः। स्वभावतो जातं स्वाभाविकम्। परस्य गुणः परगुणस्तेन। मुखस्य मारुतो मुखमारुतस्तस्य॥ ६९॥

*ताम्रोदरेष्विति* ताम्रोदरेषु अरुणाभ्यन्तरेषु तरुपल्लवेषु वृक्षकिसलयेषु पतितं च्युतं निर्धौतहारगुलिकाविशदं प्रक्षालितमुक्तामणिस्वच्छं हिमाम्भः तुषारजलं लब्धपरभागतया प्राप्तोत्कर्षतया अधरोष्ठे दन्तच्छदद्वये त्वदीयं तावकीनं सदशनार्चिर्दन्तकान्तिसहितं लीलास्मितमिव आभाति शोभते। यथा भवतोऽधरोष्ठे दन्तकान्तिसहितमीषद्धास्यमवभासते तथा नवपल्लवेषु पतितं तुषारपयः कणमवभासत इत्यर्थः।

(समासः) ताम्रं उदरं येषां ते ताम्रोदरास्तेषु। तरूणां पल्लवास्तरुपल्लवास्तेषु। निर्धौताश्च ता हारगुलिका निर्धौतहारगुलिकास्तद्वत् विशदं निर्धौतहारगुलिकाविशदम्। हिमस्याऽम्भो हिमाम्भः। लब्धः परभागो येन स लब्धपरभागस्तस्य भावस्तत्ता तया। अधरश्च ओष्ठश्चानयोः समाहारः अधरोष्ठं तस्मिन्। लीलया स्मितं लीलास्मितम्। दशनानामर्चिर्दशनार्चिस्तेन सहितं सदशनार्चिः। तव इदं त्वदीयम्॥७०॥

*यावदिति* प्रतापनिधिस्तेजोनिधिः भानुः सूर्यः यावद् न आक्र-

मते नोदृच्छति (नोदयते) तावत् उदयात्प्रागेव अन्हाय झटिति अरुणेन सूर्यसारथिना तमो ध्वान्तं निरस्तम् विध्वंसितम् हे वीर ! त्वयि भवति आयोधनाग्रसरतां युद्धाग्रगामित्वं याते प्राप्ते सति तव गुरुस्तव पिता ( रघुः ) रिपून् शत्रून् स्वयं उच्छिनत्ति किम्वा नोच्छिनत्त्येव । सूर्यकार्यं तमोनिरसनरूपमरुणो यथा करोति तथा भवानपि शत्रुनाशरूपं स्वपितुः कार्यं करोतीत्यतो विनिद्रो भवेत्यर्थः ।

( समासः ) प्रतापस्य निधिः प्रतापनिधिः। अग्रे सरतीत्यग्रेसर आयोधनस्याग्रेसर आयोधनाग्रसरस्तस्य भावस्तत्ता ताम् ॥ ७१ ॥

*शय्यामिति* उभयपक्षविनीतनिद्रा उभयपार्श्वापतजस्वापा मुखरशृङ्खलकर्षिणः शब्दायमाननिगडाकर्षणशीलास्ते तव स्तम्बेरमा हस्तिनः शय्यां शयनास्तरणं जहति त्यजन्ति । येषां स्तम्बेरमाणां दन्तकोशा इव दन्तकुड्मलाग्रा इव तरुणारुणरागयोगात् बालार्कारुणसम्पर्कात् हेतोः भिन्नाद्रिगैरिकतटा विदारितगिरिगैरिकप्रदेशा इव विभान्ति शोभन्ते । भवद्धस्तिनोऽपि शय्यां जहति भवानपि शय्यां जहात्वित्यर्थः ।

( समासः ) उभयौ च तौ पक्षावुभयपक्षौ ताभ्यां विनीता निद्रा येषां ते उभयपक्षविनीतनिद्राः स्तम्बे रमन्ते इति स्तम्बेरमाः । मुखरश्चासौ शृङ्खलो मुखरशृङ्खलस्तं कर्षन्ति तच्छीला मुखरशृङ्खलकर्षिणः । तरुणश्चासावरुणस्तरुणारुणस्तस्य रागस्तरुणारुणरागस्तस्य योगस्तरुणारुणरागयोगस्तस्मात् । भिन्नोऽद्रिगैरिकतटो यैस्ते भिन्नाद्रिगैरिकतटाः । दन्तानां कोशा दन्तकोशाः॥ ७२ ॥

*दीर्घेष्वति* हे वनजाक्ष नीरजाक्ष ! दीर्घेषु विस्तृतेषु पटमण्डपेषु नियमिता वद्धा वनायुदेश्या वनायुदेशोद्भवाः ( पारसीकाः ) अमीवाहा अश्वा निद्रां विहाय त्यक्त्वा पुरोगतानि अग्रयातानि लेह्यानि आस्वाद्यानि सैन्धवशिलाशकलानि सिन्धुजपाषाणखण्डानि वक्त्रोष्मणा मुखवाष्पेण मलिनयन्ति मलिनानि कुर्वन्ति । प्रभातकालमवगत्य अश्वा अपि सैन्धवास्वादनं कुर्वन्त्यतो भवान् निद्रां विजहात्वित्यर्थः ।

( समासः ) वनाज्जाते वनजे ते इवाक्षिणी यस्य स वनजाक्षस्तत्सम्बुद्धौ । वनायुदेशे भवा वनायुदेश्याः । वक्त्रस्योष्म वक्त्रोष्म तेन । सैन्धवस्य शिलाः सैन्धवशिलास्तासां शकलानि सैन्धवशिलाशकलानि ७३॥

*भवतीति* म्लानपुष्पोपहारो मलिनपुष्पपूजाविरलभक्ति र्विरलरचनो भवति प्रदीपाः स्वकिरणपरिवेषोद्भेदशून्याः स्वमयूखमण्डलस्फुरणनिस्तेजस्का भवन्ति अपि च अयमेष मञ्जुवाक् मधुरवचनः पञ्जरस्थः ते तव शुकः त्वत्प्रबोधप्रयुक्तां भवज्जागरणनिमित्तोच्चारितां नोऽस्माकं गिरं वाणीम् अनुवदति अनुकृत्य वदति । इदानीं प्रभातचि

ग्रहाणां दर्शनाद्भवतो जागरणं समुचितमित्यर्थः।

( समासः ) विरला भक्तिर्यस्य सः। म्लानानि तानि पुष्पाणि म्लानपुष्पाणि तेषां तैर्वा उपहारो म्लानपुष्पोपहारः। स्वस्य किरणाः स्वकिरणास्तेषां परिवेषः स्वकिरणपरिवेषस्तस्योद्भेदः स्वकिरणपरिवेषोद्भेदस्तेन शून्याः स्वकिरणपरिवेषोद्भेदशून्याः। तव प्रबोधस्त्वत्प्रबोधस्तस्मिन् प्रयुक्ता त्वत्प्रबोधप्रयुक्ता ताम्। मञ्जु वाक् यस्य सः। पञ्जरे तिष्ठतीति पञ्जरस्थः॥ ७४॥

*इतीति* इति इत्थं विरचितवाग्भिः कृतवाग्विन्यासैः बन्दिपुत्रैः वैतालिकैः ( करणैः ) सपदि शीघ्रं विगतनिद्रस्त्यक्तस्वापः कुमारोऽजो मदपटुनिनदद्भिः हर्षमधुरं कूजद्भिः राजहंसैः राजमरालैः बोधितो जागरितः सुप्रतीकः सुप्रतीकाख्यः सुरगजः गाङ्गं गङ्गासम्बन्धिसैकतं पुलिनमिव तल्पं शय्याम् उज्झाञ्चकार तत्याज। यथा राजहंसप्रबोधितः सुप्रतीकाख्यः सुरगजो गाङ्गं सैकतमुज्झतिस्म तथा बन्दिपुत्रप्रबोधितोऽजस्तल्पमुज्झाञ्चकारेत्यर्थः।

( समासः ) विरचिता वाक् यैस्ते विरचितवाचस्तैः। बन्दिनां पुत्रा-बन्दिपुत्रास्तैः। विगता निद्रा यस्य सः। मदेन पटु मदपटु सुराणां गजः सुरगजः। गङ्गाया इदं गाङ्गम्। सिकताया इदं सैकतम्॥ ७५॥

*अथेति* अथानन्तरम् ( उत्थानान्तरम् ) अञ्चिताक्षिपक्ष्मा चारुनेत्रलोमा शास्त्रदृष्टं शास्त्रावगतं दिवसमुखोचितं प्रातःकालोचितं विधिमनुष्ठानम् अवसाय्य समाप्य कुशलविरचितानुकूलवेषः प्रसाधनदक्षपुरुषकृतस्वयम्बरोचिततनेपथ्यः सन् अजः स्वयम्बरस्थं क्षितिपसमाजम् अगात् प्रापत्। त्यक्तनिद्रोऽजः प्रातःकालिकपूजादिकृत्यं समाप्य कृतनेपथ्यः सन् स्वयम्बरे जगामेत्यर्थः।

( समासः ) शास्त्रे दृष्टं शास्त्रदृष्टम्। दिवसस्य मुखं दिवसमुखं तत्रोचितो दिवसमुखोचितस्तम्। अक्ष्णोः पक्ष्माणि अक्षिपक्ष्माणि अञ्चितानि अक्षिपक्ष्माणि यस्य सः। कुशलैर्विरचितोऽनुकूलवेषो यस्य सः। क्षितिपानां समाजः क्षितिपसमाजस्तम्। स्वयम्बरे तिष्ठतीति स्वयम्बरस्थस्तम्॥ ७६॥

इति ठक्कुरोपनामक श्रीकनकलालशर्म्मणा ( मैथिलेन )
विरचितायां रघुवंशस्यार्थप्रकाशिकाटीकायामजस्वयम्बराभिगमनो नाम पञ्चमः सर्गः॥ ५॥

श्रीरस्तु शुभमस्तु।